पुक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।। (29)

असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनन्ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनु प्रश्नाः। उता विद्वानमुँल्लोकं प्रेत्य। कश्चन गच्छती (3)। आहो विद्वानमुँ ल्लोकं प्रेत्य। कश्चित्समश्नुता (3) उ। सोऽकामयत। बहुस्यां प्रजायेयेति। सतपोऽतप्यत। स तपस्तप्त्वा। इदँसर्व मसृजत। यदिदङ्किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनु प्रविश्य। सच्चत्यच्चाभवत्। निरुक्तञ्चानिरुक्तञ्च। निलयनञ्चानिलयनञ्च। विज्ञानञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च सत्यमभवत्। यदिदं किञ्च। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति।। (30)

असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानँ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वैतत्सुकृतम्। रसो वै सः। रसँह्येवायंलब्ध्वाऽऽनन्दी भवति। कोह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो नस्यात्। एषह्येवानन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽ निरुक्ते ऽनिलयनेऽभयं प्रतिष्ठाँविन्दते। अथ सोऽभयङ्गतो भवति। यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्यभयं भवति। तत्वेव भयँविदुषोऽमन्वानस्य। तदप्येष श्लोको भवति। (31)

भीषाऽस्माद्वातः पवते। भीषोदेतिसूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति। सैषाऽऽनन्दस्य मीमांसा भवति। युवा स्यात्साधु युवाऽध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वावित्तस्य पूर्णास्यात्। स एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः[ ]। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्य गन्धर्वाणा मानन्दाः। स एको देव गन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं पितृणा चिरलोक लोकानामानन्दाः। स एक आजानजानां देवानामानन्दः। [ ] श्रोत्रियस्य चाकामह तस्य। ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपि यन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्म देवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः। [ ] श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापते रानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मणआनन्दः। श्रोत्रियस्य चाकामहतस्य [ ] स य श्चायं पुरुषे। यश्चासावा

द्वितीयो। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुप सङ्क्रामति। एतं प्राणमयमात्मानमुप सङ्क्रामति। एतं मनोमयमात्मानमुप सङ्क्रामति। एतं विज्ञान मयमात्मानमु पसङ्क्रामति। एतमानन्दमयमात्मानमुप सङ्क्रामति। तदप्येष श्लोको भवति॥(32)

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्च नेति। एतं ह वाव न तपति। किमहं साधुनाकरवम्। किमहं पापमकरवमिति। स य एवंविद्वानेते आत्मानंस्पृणुते। उभेह्येवैष एते आत्मानंस्पृणुते। य एवं वेद। इत्युपनिषत्। (33)

भृगुर्वै वारुणिः वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुश्श्रोत्रं मनो वाचमिति। तं होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानिजीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ (34)

अन्नं ब्रह्मेति व्यजानात्। अन्नाध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ (35)

प्राणो ब्रह्मेति व्यजानात्। प्राणाध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसाब्रह्मविजिज्ञासस्व। . तपो ब्रह्मेति। सतपोऽतप्यत। स तपस्तप्त्वा॥ (36)

मनो ब्रह्मेति व्यजानात्। मनसोह्येव खल्विमानि भूतानिजायन्ते। मनसाजातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। सतपोऽतप्यत। स तपस्तप्त्वा॥ (37)

विज्ञानं ब्रह्मेतिव्यजानात्। विज्ञानाध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसं विशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तं होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ (38)

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता। य एवँव्वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ (39)

अन्नं ननिन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादं। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितँव्वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ (40)

अन्नन्न परिचक्षीत। तद्व्रतम्। आपो वा अन्नम्।ज्योतिरन्नादम्। अप्सुज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितँ वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥(41)

अन्नं बहु कुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितँव्वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ (42)

नकञ्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्न्ँ राद्धम्। मुखतोऽस्मा अन्न्ँ राध्यते। एतद्वै मध्यतोन्न्ँ राद्धम् । मध्यतो स्मा अन्न्ँ राध्यते । एतद्वा अन्ततोऽन्न्ँ राद्धम्। अन्त तोऽस्मा अन्न्ँ राध्यते।[ ] य एवँ व्वेद। क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरितिपादयोः। विमुक्तिरिति पायौ। इति मानुषीस्समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति।[ ] यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृत मानन्द इत्युपस्थे। सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपासीत। प्रतिष्ठावान् भवति। तन्मह इत्युपासीत। महान् भवति। तन्मन इत्युपासीत । मानवान् भवति ।[ ] तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः। तद्ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद्ब्रह्मणः परिमर इत्युपासीत। पर्येणम्रियन्ते द्विषन्तस्स पत्नाः। परियेऽप्रिया भ्रातृव्याः। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः[ ] स यएवँव्वित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतँव्विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य। इमाँल्लोकान् कामान्नीकामरूप्यनुसंचरन्।

एतथ्सामगायन्नास्ते। हा(3) वुहा (3) वुहा(3) वु।[ ] अहमन्नमहमन्न महमन्नम्। अहमन्नादोऽ(2)हमन्नादोऽ(2) हमन्नादः। अहꣳ श्लोककृदहꣳ श्लोककृदहꣳश्लोककृत्। अहमस्मि प्रथमजा ऋता (3) स्य। पूर्वन्देवेभ्यो अमृतस्यना (3) भा इ। यो माददाति स इ देवमा (3) वाः। अहमन्नमन्नमदन्तमा (3)द्मि। अहꣳव्विश्वं भुवनमभ्यभवाम्। सुवर्नज्योतीः। य एवꣳव्वेद। इत्युपनिषत्।। (43)

।। हरिः ओ(3)म् ।।

इति तैत्तिरीयोपनिषदि प्रथमः प्रश्नस्समाप्तः

श्रीः

## तैत्तिरीयोपनिषदि द्वितीय प्रश्न प्रारंभः।।

।। हरिः ओ(4)म्।।

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः।।

अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतीꣳषि समनुप्रविष्टः प्रजापतिश्चरति गर्भेअन्तः। यस्मिन्निदꣳ सञ्च विचैति सर्वꣳय्यस्मिन्देवा अधिविश्वेनिषेदुः। तदेव भूतन्तदु भव्यमा इदन्तदक्षरे परमे व्योमन्। येनावृतं खञ्च दिवं महीञ्च येनादित्यस्तपति तेजसा भ्राजसा च। यमन्तस्समुद्रे कवयो वयन्तियदक्षरे परमे प्रजाः। यतः प्रसूताजगतः प्रसूती तोयेन जीवान् व्यचसर्जभूम्याम्। यदोषधीभिः पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि। अतः परन्नान्यदणीयसꣳहि परात्परꣳय्यन्महतो महान्तम्। यदेकमव्यक्तमनन्तरूपꣳव्विश्वं पुराणन्तमसः परस्तात्। (1)। तदेवर्तन्तदु सत्यमाहु स्तदेव ब्रह्म परमङ्कवीनाम्। इष्टा पूर्तं बहुधा जातं जायमानꣳव्विश्वं बिभर्ति भुवनस्य नाभिः। तदेवाग्निस्तद्वायुस्तथ्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रममृ तन्तद्ब्रह्म तदापस्स प्रजापतिः। सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कलामुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः। अर्धमासामास ऋतवस्संवथ्सरश्च कल्पन्ताम्। स आपः प्रदुधे उभे इमे अन्तरिक्षमथो सुवः। नैनमूर्ध्व न तिर्यञ्चन्न मध्ये परिजग्रभत्। न तस्येशे कश्चन तस्य नाममहद्यशः। (2) न सन्दृशे तिष्ठति रूपमस्य नचक्षुषा पश्यति कश्चनैनम्। हृदा मनीषा मनसाऽभिक्लृप्तो य एनꣳव्विदुरमृतास्ते भवन्ति। अद्भ्यस्सं भूतो हिरण्य गर्भ इत्यष्टौ। एष हि देवः प्रदिशोनुसर्वाः पूर्वो हि जातस्स उगर्भे अन्तः। स विजायमानस्स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः। विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात्। संबाहुभ्यान्नमति संपतत्रैर्द्यावापृथिवी जनयन्देव

एकः। वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीळम्। यस्मिन्निदं सञ्च विचैकं स ओतः प्रोतश्च विभु प्रजासु। प्रतद्वोचे अमृतन्नु विद्वान् गन्धर्वो नाम निहितङ्गुहासु।(3) त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पितासत्। स नोबन्धुर्जनिता सविधाता धामानिवेद भुवनानि विश्वा। यत्र देवा अमृतमान शानास्तृतीये धामान्यभ्यैरयन्त। परिद्यावापृथिवीयन्तिसद्यः परि लोकान्परि दिशः परिसुवः। ऋतस्य तन्तुंव्वितत्वितंविचृत्य तदपश्यत्तद भवत् प्रजासु। परीत्यलोकान् परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्यात्मना SSत्मानमभि संब भूव। सदसस्पति मद्भुतं प्रियमिन्द्रस्य काम्यम्। सनि मेधामयासिषं। ऊद्दीप्यस्व जातवेदोSपघ्नन्निरृतिं मम।(4) पशूँश्च मह्यमावह जीवनञ्च दिशोदिश। मानोहिँसीज्जातवेदो गामश्वं पुरुषञ्जगत्। अबिभ्रदग्न आगहिश्रिया मापरिपातय। पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि। तन्नो रुद्रः प्रचोदयात्। तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्। तत्पुरुषाय विद्महे सुवर्ण पक्षाय धीमहि।(5) तन्नो गरुडः प्रचोदयात्। कात्यायनाय विद्महे कन्यकुमारि धीमहि। तन्नो दुर्गिः प्रचोदयात्। नारायणाय विद्महे वासुदेवाय धीमहि। तन्नोविष्णुः प्रचोदयात्। सहस्र परमादेवी शतमूला शताङ्कुरा। सर्वं हरतु मे पापं दूर्वा दुस्वप्ननाशनी। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा। शिरसा धारिता देवी रक्षस्वमां पदेपदे। उधृतासि वराहेण कृष्णेन शतबाहुना। (6) भूमिर्धेनुर्धरणी लोक धारिणी। मृत्तिकेहन मे पापंयन्मया दुष्कृतंकृतम्। त्वया हतेन पापेनजीवामि शरदश्शतम्। मृत्तिके देहिमे पुष्टित्वयि सर्वं प्रतिष्ठितम्। गन्धद्वारान्दुराधर्षा न्नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्व भूतानान्तामिहोपह्व ये श्रियम्। हिरण्यश्रृङ्गं व्वरुणं प्रपद्ये तीर्थ मे देहि याचितः। यन्मया भुक्त मसाधूनां पापे भ्यश्च प्रतिग्रहः। यन्मे मनसा वाचाकर्मणा वा दुष्कृतं कृतम्। तन्न इन्द्रो वरुणो बृहस्पतिस्सविता च पुनन्तु पुनः पुनः (7) सुमित्रान आप ओषधयस्सन्तु दुर्मित्रास्तस्मै भूयासुर्योSस्मान्द्वे ष्टि यञ्च वयं द्विष्मः। नमोSग्नयेSप्सुमते नमइन्द्राय नमो वरुणाय नमो वारुण्यै नमोSद्भ्यः। यदपां क्रूरंय्यदमेध्यंय्यदशान्तं तदपगच्छतात्।

अत्याशनादतीपानाद्यच्च उग्रात् प्रतिग्रहात्। तन्मे वरुणो राजा पाणिनाह्यवमर्शतु। सोSहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठमारुह्य गच्छेद् ब्रह्मसलोकताम्। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णिया। असिक्निया मरुद्वृधे वितस्तयाSSर्जीकीये शृणुह्या सुषोमया। ऋतञ्च सत्य ञ्चा भीद्धात्तपसो ध्यजायत। (8) ततो रात्रिरजायत ततस्समुद्रो अर्णवः। समुद्रादर्णवादधि संव्वथ्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। सूर्याच

न्द्रमसौ धाता यथा पूर्वमकल्पयत्। दिवञ्च पृथिवीञ्चान्तरिक्षमथो सुवः। यत्पृथिव्याँ रजस्स्वमान्तरिक्षे विरोदसी। इमाँस्तदापो वरुणः पुनात्वघमर्षणः। एष भूतस्य भव्ये भुवनस्य गोप्ता। एष पुण्यकृताँल्लोकानेष मृत्योर् हिरण्मयम्। द्यावापृथिव्योर् हिरण्मयँ सँ श्रितँ सुवः।(9) सनस्सुवस्स शिशाधि। आर्द्रंज्वलतिज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमिस्वाहा। अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः। वरुणोऽपामघमर्षणस्तस्मात् पापात् प्रमुच्यते। रजो भूमिस्त्वमाँ रोदयस्व प्रवदन्ति धीराः। पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः। आक्रान् थ्समुद्रः प्रथमे विधर्मञ्जनयन् प्रजा भुवनस्य राजा। (10) वृषापवित्रे अधिसानो अव्ये बृहथ्सोमो वावृधे सुवान इन्दुः। जातवेदसे सुनवामसोममरातीयतो निदहाति वेदः। सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरिताऽत्यग्निः। तामग्निवर्णां तपसाज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गान्देवीँ शरणमहं प्रपद्ये सुतरसितरसेनमः। अग्ने त्वं पारया नव्यो अस्मान् थ्स्वस्तिभिरति दुर्गाणि विश्वा। पूश्च पृथ्वी बहुलान उर्वी भवातोकाय तनयाय शँय्योः। विश्वानिनो दुर्गहाजातवेदस्सिन्धुन्ननावा दुरितातिपर्षि। अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्। पृतनाजितँ सहमान मग्निमुग्रँ हुवेम परमाथ्सधस्थात्। सनः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः। प्रत्नोषि कमीड्यो अध्वरेषु सनाच्चहोता नव्यश्च सत्सि। स्वाञ्चाग्ने तनुवं पिप्रयस्वा स्मभ्यञ्च सौभगयायजस्व। (11)

भूरग्नये पृथिव्यै स्वाहा भुवोवायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भुवस्सुवश्चन्द्रमसे दिग्भ्यस्स्वाहा नमोदेवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सवरग्न ओम्॥(12)

भूरन्नमग्नयें पृथिव्यै स्वाहा भुवोऽन्नँव्वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवस्सुवरन्नं चन्द्रमसे दिग्भ्यस्स्वाहा नमोदेवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवरन्नमोम्॥ (13)

भूरग्नयेच पृथिव्यै चमहते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्य श्च दिग्भ्यश्च महते च स्वाहा नमोदेवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवर्महरोम्॥ (14)

पाहि नो अग्न एनसे स्वाहा। पाहि नो विश्व वेदसे स्वाहा। यज्ञं पाहि विभावसो स्वाहा। सर्वं पाहि शतक्रतो स्वाहा॥ (15)

यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाँस्याविवेश। सताँ शिक्यः पुरो वाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यस्स्वधा पितृभ्यो भूर्भुवस्सुवरोम्॥ (16)

नमोब्रह्मणेधारणं मे अस्त्वनिराकरणन्धारयिता भूयासं कर्णयोश्श्रुतं माच्योढ्वं ममामुष्य ओम्॥ (17)

ऋतन्तपस्सत्यन्तपश्श्रुतन्तपश्शान्तन्तपोदानन्तपो यज्ञस्तपो भूर्भुवस्सुवर्ब्रह्मै तदुपास्यैतत्तपः। (18)

यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति यथाऽसि धारां कर्तेऽवहितामवक्रामेद्यद्युवेयुवे हवाविह् वदिष्यामि कर्त पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत्॥(19)

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातु ः प्रसादान्महिमानमीशम् ।सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषस्समिधस्सप्तजिह्वाः। सप्तइमे लोकायेषु चरन्ति प्राणा गुहाशयान्निहितास्सप्त सप्त। अतस्समुद्रा गिरयश्च सर्वेऽस्मात्स्य न्दन्तेसिन्ध वस्सर्व रूपाः। अत श्चविश्वाओषधयो रसाश्च येनैष भूतस्तिष्ठ त्यन्तरात्मा। ब्रह्मा देवानां पदवीः कवीनां ऋषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाँस्वधितिर्वनानाँसोमः पवित्रमत्येति रेभन्। अजामेकाँल्लोहित शुक्लकृष्णां बह्वीं प्रजां जनयन्तीँ सरूपाम्। अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्त भोगामजोऽन्यः॥ (20) हँसश्शुचिषद्वसुरन्तरिक्ष सद्धोतावेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृत सद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। यस्माज्जाता न परा नैव किञ्चनास य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया सँव्विदानस्त्रीणि ज्योतीँषि स चते सषोडशी। विधर्तारँ हवामहे वसोः कुविद्वनातिनः। सवितारन्नृचक्षसम्। अद्या नो देवसवितः प्रजावथ्सावीस्सौभगम्। परादुष्वप्नियँसुव। विश्वानि देवसवितर्दुरितानि परासुव। यद्भद्रन्तन्म आसुव॥ (21)

मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नस्सन्त्वोषधीः। मधुनक्तमुतोषसि मधुमत्पार्थिवँ रजः। मधुद्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृतँव्वृष भवक्षिहव्यम्। समुद्रादूर्मिर्म

घृमाँ उदारदुपाँशुना सममृतत्वमानद्। घृतस्य नाम गुह्यँय्यदस्ति जिह्वा देवानाम मृतस्य नाभिः।(22) वयन्नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामानमोभिः। उपब्रह्मा श्रृणवच्छस्यमानञ्चतुश्श्रृङ्गोवमीद् गौर एतत्। चत्वारि श्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रौरवीति महो देवो मर्त्याँ आविवेश। त्रिधाहितं पणिभिर्गुह्यमानङ्गवि देवासोघृतमन्वविन्दन्। इन्द्र एकँ सूर्य एकञ्जजान वेनादेकँ स्वधया निष्टतक्षुः। यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानँ सनो देवश्शुभया स्मृत्या सँय्युनक्तु। यस्मात्परन्ना परमस्ति किञ्चि द्यस्मान्नाणीयोन ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्ये कस्तेनेदं पूर्णं पुरुषेण सर्वम्। (23)

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु :। परेणनाकन्नि हितङ्गुहायाँव्वि भ्राजते यद्यतयो विशन्ति। वेदान्त विज्ञान सुनिश्चितार्थास्सन्न्यास योगाद्यतयश्शुद्ध सत्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे। दह्रँव्विपाप्मं परवेश्म भूतँय्यत्पुण्डरीकं पुरमध्य सँस्थम्। तत्रापि दह्रङ् गगनँव्विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्। यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्समहेश्वरः॥ (24)

सहस्र शीर्षन्देवँव्विश्वाक्षँव्विश्वशं भुवम्। विश्वन्नारायणन्देवमक्षरं परमं प्रभुम्। विश्वतः परमन्नित्यँव्विश्वन्नारायणँ हरिम्। विश्वमेवेदं पुरुषस्तद्विश्व मुपजीवति। पतिँ व्विश्वस्यात्मेश्वरँ शाश्वतँ शिवमच्यु तम्। नारायणं महाज्ञेयँव्विश्वात्मानं परायणम्। नारायण परं ब्रह्म तत्वन्नारायणः परः। नारायणपरो ज्योतिरात्मा नारायणः परः। यच्च किञ्चिज्जगत्यस्मिन् दृश्यतेश्रूयतेऽपिवा। अन्तर्बहि श्चतत्सर्वं व्याप्य नारायणस्थितः। (25) अनन्तमव्ययङ्कविँ समुदेऽन्तँव्विश्वशं भुवम्। पद्मकोश प्रतीकाशँ हृदयञ्चाप्यधोमुखम्। अधोनिष्ट्या वितस्त्यान्तु नाभ्यामुपरि तिष्ठति। हृदयन्तद्विजानीयाद्विश्वस्या यतनं महत्। सन्ततँ सिराभिस्तुलं बत्या कोशसन्निभम्। तस्यान्ते सुषिरँ सूक्ष्मन्त स्मिन्थ्सर्वं प्रतिष्ठितम्। तस्य मध्ये महानग्नि र्विश्वार्चिर्विश्वतो मुखः। सोऽग्रभुग्वि भजन्तिष्ठन्नाहारमजरः कविः। सन्तापयति स्वं देहमापादतलमस्तकम्। तस्य मध्येवह्निशिखा अणीयोर्ध्वा व्यवस्थितः। नीलतोयद मध्यस्थाविद्युल्लेखेव भास्वरा। नीवार शूकवत्तन्वी पीता भास्वत्त्यणूपमा। तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्वराट्॥ (26)

ऋतँ सत्यं परं ब्रह्म पुरुषंकृष्ण पिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षव्विश्वरूपायवै

नमः॥ (27)

आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलँ स ऋचाँल्लोकोऽथ य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नाँल्लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूँषि स यजुषा मण्डलँ स यजुषाँल्लोकस्सैषा त्रय्येव विद्यातपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः॥ (28)

आदित्यो वै तेज ओजोबलं यश श्चक्षुश्श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युस्सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं तत्सत्यमन्नमायुरमृतोजीवो विश्वः कतमस्स्वयंभुःप्रजापतिस्संवत्सर इति सँव्वत्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिर्ब्रह्मणस्सायुज्यँ सलोकतामाप्नोत्येतासामेव देवतानाँ सायुज्यँ सार्ष्टिताँ समान लोकतामाप्नोति य एवँव्वेदेत्युपनिषत्॥(29)

घृणिस्सूर्य आदित्यो मर्चयन्ति तपस्सत्यं मधु क्षरन्ति तद् ब्रह्म तदाप आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्॥ (30)

सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्रस्सन्महो नमो नमः। विश्वं भूतं भुवनं चित्रं बहुधा जातञ्जायमानञ्च यत्। सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु॥ (31)

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शन्तमँहृदे। सर्वोह्येष रुद्रस्तस्मै रुद्रायनमो अस्तु॥ (32)

नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः॥(33)

यस्य वै कङ्कत्यग्निहोत्रहवणी भवति प्रतिष्ठिताः प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै॥ (34)

कृणुष्वपाज इति पञ्च॥(35)

आदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषाँ सर्व भूतानां माता मेदिनी महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वाभूता कतमा कायासा सत्येत्यमृतेति वसिष्ठः॥ (36)

आपो वाइदँ सर्वँव्विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽमृतमापोऽन्नमापस्सम्राडापो विराडापस्स्वराडापश्छन्दाँस्यापो ज्योतीँष्यापस्सत्यमापस्सर्वादेवता आपो भूर्भुवस्सुवराप ओम्॥(37)

*आपः पुनन्तु पृथिवीं पृथिवी पुता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पुता पुनातु माम्। यदुच्छिष्ट मभोज्यँय्यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहँ स्वाहा। (38)

*अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यदह्ना पापम कार्षम्। मनसावाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्त देवलुंपतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयौनौ। सत्ये ज्योतिषि जुहोमि स्वाहा।।(39)

*सूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद् रात्रिया पापम कार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। रात्रिस्त देवलुंपतु। यत्किं च दुरितं मयि। इदमहं माममृतयौनो। सूर्ये ज्योतिषि जुहोमि स्वाहा।।(40)

*आयातु वरदा देव्यक्षरं ब्रह्म संमितम्। गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्वनः। ओजोऽसि सहोऽसि बलमसि भ्राजोऽ सिदेवानान्धाम नामासि विश्वमसि विश्वायुर सर्वमसि सुर्वायुरभि भूरोङ्गायत्रीमावाहयामि।।(41)

*ओं भूः ओं भुवः ओँ सुवः ओं महः ओंजनः। ओं तपः। ओँ सत्यम्। ओन्तत्सवितुवरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्।।(42)

ओं भू र्भुवस्सुवर्महर्जनस्तपस्सत्यन्तद् ब्रह्म तदाप आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम्।।(43)

ओन्तद् ब्रह्म। ओन्तद्वायुः। ओन्तदात्मा। ओन्तत्सर्वम्। ओन्तत्पुरोर्नमः।। (44)

*उत्तमे शिखरे देवीभूम्यां पर्वत मूर्धनि। ब्राह्मणेभ्योह्यनुज्ञानं गच्छ देवि यथा सुखम्।।(45)

ओमन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु। त्वँय्यज्ञस्त्वँव्विष्णुस्त्वँव्वषट्कारस्त्वँ रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः।। (46)

अमृतोपस्तरणमसि।।(47)

प्राणे निविष्टोऽमृतञ्जुहोमि। प्राणाय स्वाहा। अपाने निविष्टोऽमृतञ्जुहोमि। अपानाय स्वाहा। व्याने निविष्टोऽमृतञ्जुहोमि। व्यानाय स्वाहा। उदाने

---

* सन्ध्यावन्दन मन्त्राः।

निविष्टोऽमृतञ्जुहोमि। उदानाय स्वाहा। समाने निविष्टोऽमृतञ्जुहोमि। समानाय स्वाहा। ब्रह्मणिम आत्माऽमृतत्वाय। (48)

प्राणे निविष्टोऽमृतञ्जुहोमि। शिवो मा विशाप्रदाहाय। प्राणाय स्वाहा। अपाने निविष्टोऽमृतञ्जुहोमि। शिवो माविशाप्रदाहाय। अपानाय स्वाहा। व्यानेनिविष्टोऽमृतञ्जुहोमि। शिवो मा विशाप्रदाहाय। व्यानाय स्वाहा। उदाने निविष्टोऽमृतञ्जुहोमि। शिवो मा विशाप्रदाहाय। उदानाय स्वाहा। समाने निविष्टोऽमृतञ्जुहोमि। शिवो मा विशाप्रदाहाय। समानाय स्वाहा। ब्रह्मणि म आत्माऽमृतत्वाय॥(49)

अमृतापिधानमसि॥(50)

श्रद्धायां प्राणे निविश्यामृत ँ हुतम्। प्राणमन्ने नाप्यायस्व। अपाने निविश्यामृत ँ हुतम्। अपानमन्नेनाप्यायस्व। व्याने निविश्यामृत ँ हुतम् व्यानमन्नेनाप्यायस्व। उदाने निविश्यामृत ँ हुतम्। उदानमन्ने नाप्यायस्व। समाने निविश्यामृत ँ हुतम्। समानमन्नेनाप्यायस्व। ब्रह्मणि म आत्माऽमृतत्वाय॥(51)

प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकस्तेनान्नेनाप्यायस्व ॥(52)

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥(53)

मेधादेवी जुषमाणान आगा द्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा नुदमाना दुरुक्तान् बृहद्वदेम विदथे सुवीराः। त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्माऽऽगत श्रीरुत त्वया। त्वया जुष्टश्चित्रं विन्दते वसु सानो जुषस्व द्रविणोनमेधे ॥(54)

मेधां म इन्द्रो ददातु मेधान्देवी सरस्वती। मेधां मे अश्विनौ देवा वाधत्तां पुष्करस्रजा ॥(55)

अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् ॥(56)

आमां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् ॥(57)

सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमः। भवे भवे नाति भवे भजस्वमां भवोद्भवाय नमः ॥(58)

वामदेवायनमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमस्सर्वभूत दमनाय नमो मनोन्मनाय नमः ॥(59)

अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यस्सर्वतश्शर्व सर्वेभ्यो नमस्ते अस्तु रुद्र रूपेभ्यः ॥(60)

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।(61)

ईशानस्सर्वविद्यानामीश्वरस्सर्व भूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥(62)

ब्रह्ममेतु मां । मधुमेतु मां । ब्रह्ममेव मधुमेतुमां । यास्ते सोमप्रजा वत्सोभिसो अहम् । दुष्वप्न हन्दुरुष्वह ।यास्ते सोमप्राणा ँ स्ताञ्जुहोमि। त्रिसुपर्ण मयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यौंव्वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात् पङ्क्ति पुनन्ति । ओं ॥(63)

ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधुमेधया । अद्यानो देवसवितः प्रजावत्सावीस्सौभगम् । परादुष्वप्निय ँ सुव । विश्वानि देवसवित दुरितानि परा सुव । यद्भद्रं तन्म आसुव । मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः । मधुनक्त मुतोषसि मधुमत्पार्थिव ँ रजः । मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमा ँ अस्तुसूर्यः । माध्वीर्गावो भवन्तु नः । य इमं त्रिसुपर्ण मयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यौंव्वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति । आसहस्रात् पङ्क्तिं पुनन्ति। ओम् ॥(64)

ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधुमेधवा । ब्रह्मा देवानां पदवीः कवीनामृषि र्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणा ँ स्वधितिर्वनानाँसोमः पवित्र मत्येति रेभन् । ह ँ सश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वर सदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । वीरहत्यौंव्वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात् पङ्क्ति पुनन्ति । ओम् ॥(65)

प्राणापान व्यानोदान समाना मे शुद्ध्यन्तां ज्योतिरहं विरजाविपाप्मा भूयास ँ स्वाहा ॥(66)

वाङ्मनश्चक्षुश्श्रोत्र जिह्वाघ्राण रेतो बुध्याकूति सङ्कल्पामे शुद्ध्यन्तां ज्योतिरहँव्विरजाविपाप्मा भूयास ँ स्वाहा ॥(67)

शिरः पाणि पाद पार्श्व पृष्ठोदर जङ्घ शिश्नोपस्थ पायवो मे शुध्यन्तां ज्योतिरहं विरजाविपाप्मा भूयासँस्वाहा ॥(68)

त्वक् चर्म माँस रुधिर मेदोऽस्थि मज्जा मे शुध्यन्तां ज्योतिरहं विरजाविपाप्मा भूयासँस्वाहा ॥(69)

शब्द स्पर्श रूप रस गन्धा मे शुध्यन्तां ज्योतिरहँ व्विरजाविपाप्मा भूयासँस्वाहा॥(70)

पृथिव्यप् तेजो वाय्वाकाशा मे शुद्ध्यन्तां ज्योतिरहं व्विरजा विपाप्मा भूयासँस्वाहा॥(71)

अन्नमय प्राणमय मनो मय विज्ञानमयानन्दमयामे शुध्यन्तां ज्योतिरहँव्विरजाविपाप्मा भूयासँस्वाहा ॥(72)

विविट्टयै स्वाहा ॥(73)

घषोत्काय स्वाहा ॥(74)

उत्तिष्ठ पुरुष हरीलोहित पिङ्गलाक्षि देहि देहि ददापयिता मे शुद्ध्यन्तां ज्योतिरहं व्विरजाविपाप्मा भूयासँ स्वाहा ॥(75)

ओँ स्वाहा ॥(76)

सत्यं परंपरँ सत्यँ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताँ हि सत्यन्तस्मात्सत्ये रमन्ते तप इति तपो नानशनात्परँय्यद्धि परन्तपस्तद् दुर्धर्षन्तद्दुरा धर्षं तस्मात्तपसि रमन्ते दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते दानमिति सर्वाणि भुतानि प्रशँसन्ति दानान्नाति दुष्करं तस्माद्दाने रमन्ते धर्म इति धर्मेण सर्वमिदं परिगृहीतन्धर्मान्नाति दुश्चरन्तस्माद् धर्मे रमन्ते प्रजन इति भूयाँ सस्तस्माद् भूयिष्ठाः प्रजायन्ते तस्माद् भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते यज्ञ इति यज्ञेनहि देवा दिवङ्गतास्तस्माद्यज्ञे रमन्ते मानसमिति विद्वाँसस्तस्माद्विद्वाँस एव मानसे रमन्ते न्यास इति ब्रह्मा ब्रह्माहि परः परी हि ब्रह्मा तानि वा एतान्यवराणि तपाँसि न्यास एवात्यरेचयद् य एवँव्वेदेत्युपनिषत् ॥(77)

प्राजापत्यो हारुणिस्सुपर्णे यः प्रजापतिं पितरमुपससार किं भगवन्तः परमँव्वदन्ती ति तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यँव्वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति तपसा देवा देवतामग्र आयन्तपसर्षयस्सुवरन्वविन्दन् तपसा सपत्नान् प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठतं तस्मात्तपः परमँव्वदन्ति दमेन दान्ताः किल्विषमवधून्वन्ति दमेन ब्रह्मचारिणस्सुवरगच्छन्

दमो भूतानान्दुराधर्षंदमे सर्वं प्रतिष्ठितं तस्माद्दमः परमँ वदन्ति शमेन शान्ता
शिशवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दन् शमो भूतानान्दुराधर्षँ शमे सर्वं
प्रतिष्ठितं तस्माच्छमः परमँ वदन्ति दानँय्यज्ञानाँव्वरूथं दक्षिणा लोकेदातारँ सर्व
भूतान्युपजीवन्ति दानेनारा तीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं
प्रतिष्ठितंतस्माद्दानं परमँव्वदन्ति धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा
उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमँव्वदन्ति प्रजननँ
व्वै प्रतिष्ठा साधु प्रजायास्तन्तुन्तन्वानः पितृणामनृणो भवति तदेव तस्यानृणं
तस्मात्प्रजननं परमँव्वदन्त्यग्नयो वै त्रयी विद्या देवयानः पन्था गार्हपत्य ऋक् पृथिवी
रथन्तरमन्वा हार्य पचनो यजुरन्तरिक्षँव्वाम देव्यमाहवनीयस्साम सुवर्गो लोको
बृहत्तस्मादग्नीन् परमँव्वदन्त्यग्निहोत्रँ सायं प्रातर्गृहाणान्निष्कृतिस्स्विष्टँ सुहुतँय्यज्ञ
क्रतूनां प्रायणँ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्नि होत्रं परमँव्वदन्ति यज्ञ इति यज्ञेन
हि देवा दिवङ्गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं
तस्माद्यज्ञं परमँव्वदन्ति मानसँव्वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति
मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमँ व्वदन्ति
न्यास इत्याहु र्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमस्स्वयंभुः प्रजापतिस्संव्वथ्सर
इति सँव्वथ्सरो ऽसावादित्यो यएष आदित्ये पुरुषस्स परमेष्ठी ब्रह्मात्मा
याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षतिपर्जन्येनौषधि वनस्पतयः प्रजायन्त
ओषधि वनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा
श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिश्शान्त्या चित्तश्चित्तेन
स्मृतिँ स्मृत्या स्मारँ स्मारेण विज्ञानँव्विज्ञानेनात्मानँव्वे दयति तस्मादन्नन्ददन्
थ्सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानँव्विज्ञानादानन्दो
ब्रह्मयोनिस्सवा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी
चान्तरिक्षञ्च द्यौश्च दिश श्चावान्तर दिशाश्च सवै सर्वमिदं जगत्सच भूतँ स
भव्यञ्जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान्तमसो वरिष्ठाद् ज्ञात्वा
तमेवं मनसा हृदा चभूयोन मृत्युमुपयाहि विद्वान् तस्मान्न्यास मेषान्तपसामति
रिक्तमाहुर्वसुरण्वो विभूरसि प्राणे त्वमसि सन्धाता ब्रह्मन् त्वमसि विश्वसृक् तेजोद
स्त्वमस्यग्नेर्वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि
ब्रह्मणे त्वामहस ओमित्यात्मानँय्युञ्जीतैतद्वै महोपनिषदं देवानाङ्गुह्यँय्य
एवँव्वेद ब्रह्मणो महिमानमाप्नोति तस्माद् ब्रह्मणो महिमानमित्युपनिषत् ॥(78)

तस्यैवॅंव्विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शिखाहृदयँय्यूपः काम आज्यं मन्युः पशुस्तपोऽग्निश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सादीक्षा यदश्नाति यत्पिबति तदस्य सोमपानँ य्यद्रमते तदुपसदो यत्सञ्चरत्यु पविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधो यत्सायं प्रातर्मध्यन्दिनञ्च तानि सवनानि ये अहोरात्रे ते दर्श पूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये सँव्वत्सराश्च परिवत्सरा श्च तेऽह र्गणास्सर्व वेदसँव्वा एतत्सत्रँयन्मरणं तदवभृथ एतद्वै जरामर्यमग्निहोत्रँ सत्रँय्य एवँव्विद्वानुदगयने प्रमीयते देवानामेव महिमानँ गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानङ्गत्वा चन्द्रमसस्सायुज्यं गच्छत्येतौ वै सूर्या चन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयाति तस्माद् ब्रह्मणो महिमा नमाप्नोति तस्माद् ब्रह्मणो महिमानमित्युपनिषत् ॥(79)

सहनाववतु । सहनौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिश्शान्तिश्शान्तिः ॥

॥ हरिः ओ(3)म् ॥

॥ तैत्तिरीयोपनिषदि द्वितीयः प्रश्नस्समाप्तः ॥

॥ तैत्तिरीयोपनिषत् समाप्ता ॥

श्रीः

## ॥ नारायणोपनिषत् ॥

अथ पुरुषोह वै नारायणोऽकामयत प्रजास्सृजेयेति । नारायणा त्प्राणो जायते। मनस्सर्वेन्द्रियाणिच । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । नारायणाद् ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणादिन्द्रो जायते । नारायणात्प्रजापतयः प्रजायन्ते । नारायणाद् द्वादशादित्या रुद्रा वसवस्सर्वाणि च छन्दाँसि । नारायणादेव समुत्पद्यन्ते । नारायणात्प्रवर्तन्ते । नारायणेप्रलीयन्ते । एतदृग्वेदशिरो योऽधीते । अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः। शक्रश्च नारायणः । कालश्च नारायणः । दिशश्च नारायणः । विदिशश्च नारायणः । ऊर्ध्वं चनारायणः । अधश्चनारायणः । अन्तर्बहिश्च नारायणः। नारायण एवेदँ सर्वम् ।

यद्भूतं यच्च भव्यम् । निष्कळङ्को निर्विकल्पो निरञ्जनो निराख्यातश्शुद्धो देव एको नारायणः । न द्वितीयोऽस्ति कश्चित् । य एवँव्वेद । स विष्णुरेव भवति स विष्णुरेव भवति । एतद्यजुर्वेद शिरोयोऽधीते। ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ओमित्येकाक्षरम्। नम इति द्वे अक्षरे । नारायणेति पञ्चाक्षराणि । एतद्वै नारायण स्याष्टाक्षरं पदम्। यो हवै नारायण स्याष्टाक्षरं पदमध्येति । अनपब्रवस्सर्वमायुरेति। विन्दते प्राजापत्यं रायस्पो षंगौपत्यम्। ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । य एवँव्वेद । एतत्सामवेद शिरोयोऽधीते । प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्स्वरूपम् । अकार उकार मकार इति । तानेकधा समभरत् तदेतदोमिति । यमुक्त्वा मुच्यते योगी जन्म संसार बन्धनात् । ओं नमो नारायणायेति मन्त्रोपासकः। वैकुण्ठ भुवन लोकङ्गमिष्यति । तदिदं पुरं पुण्डरीकं विज्ञानघनम्। तस्मात्तटिदाभमात्रम्। ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनोम् । सर्वभूतस्थ मेकं नारायणम् । कारणरूपमकारं परं ब्रह्मोम् । एतदथर्वशिरो योऽधीते । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायम धीयानो दिवसकृतं पापं नाशयति। सायं प्रातर धीयानो पापोऽपापो भवति । माध्यन्दिनमादित्याभिमुखोऽ धीयानः । पञ्चमहापातकोपपातकात् प्रमुच्यते । सर्व वेदपारायण पुण्यं लभते । नारायण सायुज्य मवाप्नोति नारायणसायुज्यमवाप्नोति । य एवंव्वेद । इत्युपनिषत् ॥

## ॥ वेदारंभः ॥

अग्नि मीळे पुरोहितँय्यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

इषे त्वोर्जेत्वा वायवस्थोपायवस्थ देवो वस्सविता प्रार्पयतु श्रेष्ठतमायकर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मामावस्तेनईशत माघशँसो रुद्रस्य हेतिः परिवो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥

अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सथ्सि बर्हिषि ॥

शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शँय्योरभिस्रवन्तु नः ॥

## ॥ यजुर्वेद पारायण पूर्तिः ॥

समुद्र उदरमन्तरिक्षं पायुर्द्यावा पृथिवी आण्डौ ग्रावा शेपस्सोमो रेतो यज्जञ्जभ्यते तद्विद्योतते यद्विधूनुते तत्स्थनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनुजायत एतौवै महिमानाव श्वमभि तस्संब भूवतुर् हयो देवानवहदर्वासुरान् वाजी गन्धर्वा अश्वो

मनुष्यान्त्समुदो वा अश्वस्य योनिस्समुद्रो बन्धुः ॥

यद्दर्शपूर्णमासौ यजते । अश्वस्यैव मेध्यस्य पदे पदे जुहोति । एतदनुकृतिह स्म वैपुरा । अश्वस्य मेध्यस्य पदे पदे जुह्वति । यो वा अश्वस्य मेध्यस्य विवर्तनं वेद । अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति । असौ वा आदित्योऽश्वः । स आहवनीयमागच्छति । तद्विवर्तते । यदग्निहोत्रं जुहोति । अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति । एतदनुकृतिहस्मवै पुरा । अश्वस्य मेध्यस्य विवर्तने विवर्तने जुह्वति ॥

यदेकादशेऽहन् प्रवृज्यते । इन्द्रो भूत्वा त्रिष्टुभमेति । यद्द्वादशेऽहन् प्रवृज्यते । सोमो भूत्वा सुत्यमेति । यत्पुरस्तादुपसदां प्रवृज्यते। तस्मादितः पराङमूँल्लोकाँ स्तपन्नेति। यदुपरिष्टादुपसदां प्रवृज्यते । तस्माद मुतोऽर्वाङिमाँल्लोकाँ स्तपन्नेति । य एवँव्वेद । ऐवतपति ॥

तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन । पञ्च पञ्चाशतःस्त्रिवृतस्सँव्वथ्सराः । पञ्च पञ्चाशद्भः पञ्चदशाः। पञ्च पञ्चाशतस्सप्त दशाः। पञ्चपञ्चाशत एकविँ शाः । विश्वसृजाँ सहस्र संवथ्सरम् । एतेन वै विश्वसृज इदँव्विश्वमसृजन्त । यद्विश्वमसृजन्त । तस्माद्विश्वसृजः । विश्वमेनानुप्रजायते । ब्रह्मणस्सायुज्यँ सलोकताँ य्यन्ति। एतासामेव देवतानाँ सायुज्यम् । सार्ष्टिताँ समान लोकताँय्यन्ति । य एतदुपयन्ति । ये चैनत्प्राहुः । येभ्यश्चैनत् प्राहुः । ओम् ॥

तस्यैवँव्विदुषो – See page No. 32

यस्य स्मृत्या च नामोक्त्या तपो यज्ञ क्रियादिषु । न्यूनं संपूर्णतां यातु सद्यो वन्दे तमच्युतम् । इति विद्यातपो योनिः अयोनिर्विष्णुरव्ययः । वाग्यज्ञेनार्थितो देवः प्रीयतां मे जनार्दनः । श्रीजनार्दनः प्रीयताम् । वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः । वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः । तह्यस्याहुः परं धर्म उपधर्मोऽन्य उच्यते । प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै। यानि तेषामशेषाणां कृष्णानुस्मरणं परम् । स्वर मात्रा विहीनन्तु पदाक्षर विवर्जितः । न्यूनातिरिक्तं यत्किञ्चित् आभिर्गीर्भिरुदीरयेत् ॥

## प्रातस्सन्ध्योपस्थान मन्त्रः

मित्रस्य चर्षणी धृतश्श्रवो देवस्य सानसिम्। सत्यं चित्रश्रवस्तमम्। मित्रो जनान् यातयति प्रजानन् मित्रो धातार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाऽ भिचष्टे सत्याय हव्यं घृतवद्विधेम। प्रसमित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनम ँहो अश्नोत्यन्तितो न दूरात् ॥

## माध्याह्निक उपस्थान मन्त्रः

आसत्येनरजसावर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन् । उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देव न्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशेविश्वा य सूर्यं । चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावा पृथिवी अन्तरिक्ष ँ सूर्य आत्मा जगतस्तस्थुषश्च। तच्चक्षुर्देवहितं पुरस्ताच्छु क्रमुच्चरत्। पश्येम शरदश्शतं जीवेम शरदश्शतं नन्दाम शरद श्शतं मोदाम शरदश्शतं भवाम शरदश्शतँ श्रृणवाम शरदश्शतं प्रब्रवाम शरदश्शतमअजी तास्स्याम शरदश्शतम् ज्योक् च सूर्यं दृशे । य उदगान्महतोऽर्णवा द्विभ्राजमान श्शरिरस्य मध्यात् समावृष भो लोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु ॥

## सायं सन्ध्योपस्थानमन्त्रः

इमं मे वरुणश्श्रुधीहवमद्या च मृडय। त्वामवस्युराचके। तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहबोध्यु रुशँसमान आयुः प्रमोषीः । यच्छिद्धिते विशो यथाप्रदेव वरुणव्रतम् । मिनीमसि द्यवि द्यवि । यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्या श्चरामसि । अचित्ती यत्तव धर्मायुयोपिम मानस्तस्मादेनसो देवरीरिषः । कितवासो यदिरिपुर्न दीवि यद्वा घा सत्यमुतयन्न विद्म । सर्वाता विष्य शिथिरेव देवाथातेस्याम वरुण प्रियासः॥

॥ श्रीविष्णवे परमात्मने नमः ॥

# ॥ श्रीविष्णुसहस्रनामस्तोत्रम् ॥

1

॥ हरिः ओं ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥१॥

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥२॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥३॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥४॥

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥५॥

यस्य स्मरणमात्रेण जन्मसंसारबन्धनात् ।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे ॥६॥

**ओं नमो विष्णवे प्रभविष्णवे ॥**

2

**श्रीवैशम्पायन उवाच**

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ॥
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥१॥

**युधिष्ठिर उवाच**

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥२॥

को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन् मुच्यते जन्तुर्जन्मसंसार बन्धनात् ॥३॥

श्रीभीष्म उवाच

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥४॥

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥५॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥६॥

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥७॥

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥८॥

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥९॥

पवित्राणां पवित्रं यो मङ्गळानां च मङ्गळम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥१०॥

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥११॥

तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे श्रृणु पापभयापहम् ॥१२॥

यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥१३॥

विष्णोर्नामसहस्रस्य वेदव्यासो महान् ऋषिः ।
छन्दोऽनुष्टुप्तथा देवो भगवान् देवकीसुतः ॥

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥

विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥

अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्र महामन्त्रस्य। वेदव्यासो भगवानृषिः । अनुष्टुप् छन्दः । श्रीमहाविष्णुः परमात्मा श्रीमन्नारायणो देवता । अमृतांशूद्भवो

भानुरिति बीजम् । देवकीनन्दनः स्रष्टेति शक्तिः । उद्भवः क्षोभणो देव इति परमो मन्त्रः । शङ्खभृन्नन्दकी चक्रीति कीलकम् । शार्ङ्गधन्वा गदाधर इत्यस्त्रम् । रथाङ्गपाणिरक्षोभ्य इति नेत्रम्। त्रिसामा सामगः सामेति कवचम् । आनन्दं परब्रह्मेति योनिः । ऋतुः सुदर्शनः काल इति दिग्बन्धः । श्री विश्वरूप इति ध्यानम् । श्रीमहाविष्णु कैङ्कर्य रूपे (प्रीत्यर्थे) श्रीसहस्रनामजपे विनियोगः ।

## ध्यानम्

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते मौक्तिकानां
मालाक्लृप्तासनस्थः स्फटिकमणिनिभैर्मौक्ति कैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरि विरचितै र्मुक्त पीयूषवर्षैः ।
आनन्दी नः पुनीयादरिनलिनगदाशङ्ख पाणिर्मुकुन्दः ॥

भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाः शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तःस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्व दैत्यै
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

मेघश्यामं पीतकौशेयवासं
श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् ।
पुण्योपेतं पुण्डरीकायताक्षं
विष्णुं वन्दे सर्वलोकैकनाथम् ॥

सशङ्खचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षः स्थलशोभिकौस्तुभं नमामि विष्णुं शिरसा चतुर्भुजम् ॥

छायायां पारिजातस्य हेमसिंहासनोपरि ।
आसीनमम्बुदश्याम मायताक्षमलंकृतम् ॥

चन्द्राननं चतुर्बाहुं श्रीवत्साङ्कितवक्षसम् ।
रुक्मिणीसत्यभामाभ्यां सहितं कृष्णमाश्रये ॥

## नामसहस्रप्रारम्भः

ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद् भूतभृद्भावो भूतात्मा भूतभावनः ॥१॥

पूतात्मा परमात्मा च मुक्तानां परमागतिः ।
अव्ययः पुरुषस्साक्षी क्षेत्रज्ञोऽक्षर एव च ॥२॥

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥३॥

सर्वश्शर्वश्शिवस्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥४॥

स्वयम्भूश्शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥५॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठस्स्थविरो ध्रुवः ॥६॥

अग्राह्यश्शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूत स्त्रिककुद्धाम पवित्रं मङ्गळं परम् ॥७॥

ईशानः प्राणदः प्राणो ज्येष्ठश्श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥८॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥९॥

सुरेशश्शरणं शर्म विश्वरेताः प्रजाभवः ।
अहस्संवत्सरो व्याळः प्रत्ययस्सर्वदर्शनः ॥१०॥

अजस्सर्वेश्वरस्सिद्धः सिद्धिस्सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥११॥

वसुर्वसुमनास्सत्यस्समात्मा सम्मितस्समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥१२॥

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिश्शुचिश्रवाः ।
अमृतश्शाश्वतस्स्थाणु र्वरारोहो महातपाः ॥१३॥

सर्वगः सर्वविद्भानुः विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥१४॥

लोकाध्यक्षस्सुराध्यक्षो धर्माध्यक्षः कृताकृतः।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥१५॥

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुः जगदादिजः ।

अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥१६॥

उपेन्द्रो वामनः प्रांशुः अमोघश्शुचिरूर्जितः ।
अतीन्द्रस्सङ्ग्रहस्सर्गो धृतात्मा नियमो यमः ॥१७॥

वेद्यो वैद्यस्सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥१८॥

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः
अनिर्देश्यवपुः श्रीमान् अमेयात्मा महाद्रिधृत् ॥१९॥

महेष्वासो महीभर्ता श्रीनिवासस्सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥२०॥

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः
हिरण्यनाभस्सुतपाः पद्मनाभः प्रजापतिः ॥२१॥

अमृत्युस्सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणश्शास्ता विश्रुतात्मा सुरारिहा ॥२२॥

गुरुर्गुरुतमो धाम सत्यस्सत्यपराक्रमः ।
निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥२३॥

अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥२४॥

आवर्तनो निवृत्तात्मा संवृतस्संप्रमर्दनः ।
अहस्संवर्तको वह्निरनिलो धरणीधरः ॥२५॥

सुप्रसादः प्रसन्नात्मा विश्वसृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतस्साधुर्जह्नुर्नारायणो नरः ॥२६॥

असङ्ख्येयो ऽप्रमेयात्मा विशिष्टश्शिष्टकृच्छुचिः ।
सिद्धार्थस्सिद्धसङ्कल्पः सिद्धिदस्सिद्धिसाधनः ॥२७॥

वृषाही वृषभो विष्णुः वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥२८॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥२९॥

ओजस्तेजो द्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धस्स्पष्टाक्षरो मन्त्रः चन्द्रांशुर्भास्करद्युतिः ॥३०॥

अमृतांशूद्भवो भानुः शशबिन्दुस्सुरेश्वरः ।
औषधं जगतस्सेतुः सत्यधर्मपराक्रमः ॥३१॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥३२॥

युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥३३॥

इष्टोऽविशिष्टश्शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥३४॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपान्निधि रधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥३५॥

स्कन्दस्स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥३६॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥३७॥

पद्मनाभो ऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिःऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥३८॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षण लक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥३९॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरस्सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥४०॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥४१॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टः तुष्टः पुष्टः शुभेक्षणः ॥४२॥

रामो विरामो विरतो मार्गो नेयो नयोऽनयः ।
वीरश्शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥४३॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणमः पृथुः ।
हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥४४॥

ऋतुस्सुदर्शनः कालः परमेष्ठी परिग्रहः ।

उग्रस्संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥४५॥

विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥४६॥

अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमि र्नक्षत्री क्षमः क्षामस्समीहनः ॥४७॥

यज्ञ इज्यो महेज्यश्च क्रतुस्सत्रं सताङ्गतिः ।
सर्वदर्शी निवृत्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥४८॥

सुव्रतः सुमुखस्सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुः विदारणः ॥४९॥

स्वापनस्स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥५०॥

धर्मगुब्धर्मकृद्धर्मी सदक्षरमसत्क्षरम् ।
अविज्ञाता सहस्रांशुः विधाता कृतलक्षणः ॥५१॥

गभस्तिनेमिस्सत्त्वस्थस्सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥५२॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥५३॥

सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः ॥५४॥

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥५५॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥५६॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाश्रृङ्गः कृतान्तकृत् ॥५७॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥५८॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः संकर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥५९॥

भगवान् भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥६०॥

सुधन्वा खण्डपरशु र्दारुणो द्रविणप्रदः ।
दिविस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥६१॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥६२॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥६३॥

अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥६४॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥६५॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥६६॥

उदीर्णः सर्वतश्चक्षु रनीशः शाश्वतस्स्थिरः ।
भूशयोभूषणो भूतिः अशोकः शोकनाशनः ॥६७॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥६८॥

कालनेमिनिहा शौरिः शूरः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥६९॥

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपु विष्णुर्वीरोऽ नन्तो धनंजयः ॥७०॥

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥७१॥

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥७२॥

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥७३॥

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।

वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥७४॥

सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥७५॥

भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदोऽदृप्तो दुर्धरोऽथापराजितः ॥७६॥

विश्वमूर्तिर्महामूर्ति र्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्ति श्शताननः ॥७७॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥७८॥

सुवर्ण वर्णो हेमाङ्गो वराङ्ग श्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥७९॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥८०॥

तेजो वृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकश्रृङ्गो गदाग्रजः ॥८१॥

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥८२॥

समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥८३॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥८४॥

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनिः श्रृङ्गी जयन्तः सर्वविज्जयी ॥८५॥

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥८६॥

कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृताशो ऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥८७॥

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽ श्वत्थः चाणूरान्ध्रनिषूदनः ॥८८॥

4

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥८९॥

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥९०॥

भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥९१॥

धनुर्धरो धनुर्वेदो दण्डो दमयिताऽदमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥९२॥

सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥९३॥

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥९४॥

अनन्त हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठान मद्भुतः ॥९५॥

सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥९६॥

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥९७॥

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥९८॥

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥९९॥

अनन्तरूपो ऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥१००॥

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिः भीमो भीमपराक्रमः ॥१०१॥

आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥१०२॥

प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।

तत्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥१०३॥

भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥१०४॥

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगु ह्यमन्नमन्नाद एव च ॥१०५॥

आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥१०६॥

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥१०७॥

श्री सर्वप्रहरणायुध ओं नम इति ॥

वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान् नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥

श्री वासुदेवोऽभिरक्षतु ओं नम इति ॥

फलश्रुतिश्लोकाः

इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१॥

य इदं श्रृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः ॥२॥

वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रस्सुखमवाप्नुयात् ॥३॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी प्रजार्थी चाप्नुयात् प्रजाः ॥४॥

भक्तिमान् यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥५॥

यशः प्राप्नोति विपुलं ज्ञाति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥६॥

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥७॥

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।

भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥८॥

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥९॥

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१०॥

न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं वाप्युपजायते ॥११॥

इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्ति श्रीधृतिस्मृतिकीर्तिभिः ॥१२॥

नक्रोधो नचमात्सर्यं नलोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥१३॥

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१४॥

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१५॥

इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥१६॥

सर्वागमानामाचारः प्रथमं परिकल्पितः ।
आचारप्रथमो धर्मो धर्मस्य प्रभुरच्युतः ॥१७॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥१८॥

योगज्ञानं तथा सांख्यं विद्याः शिल्पादिकर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥१९॥

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रींलोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत् पुरुषः श्रेयः प्राप्तुं सुखानि च ॥२१॥

विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥२२॥

न ते यान्ति पराभवम् ओं नम इति ।

**अर्जुन उवाच**

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनु रक्तानां त्राता भव जनार्दन ॥१॥

**श्रीभगवानुवाच**

योमां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ।

**स्तुत एव न संशय ओं नम इति ॥२॥**

**व्यास उवाच**

वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासो ऽसि वासुदेव नमोऽस्तु ते ।

**श्रीवासुदेव नमोऽस्तु त ओं नम इति ॥३॥**

**पार्वत्युवाच**

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥४॥

**ईश्वर उवाच**

श्रीराम राम रामेति रमे रामे मनोरमे ।
सहस्रनामतत्तुल्यं रामनाम वरानने ॥५॥

**श्रीरामनाम वरानन ओं नम इति ॥**

**ब्रह्मोवाच**

नमोऽस्त्वनन्ताय सहस्रमूर्तये सँहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥६॥

**सहस्रकोटीयुगधारिण ओं नम इति ॥**

**सञ्जय उवाच**

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७॥

श्रीभगवानुवाच

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥८॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥९॥

आर्ता विषण्णाः शिथिलाश्च भीताः घोरेषु च व्याधिषु वर्तमानाः।
संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥१०॥

## ॥ श्री पञ्चायुधस्तोत्रम् ॥

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम् ।
सुरद्विषां प्राणविनाशि विष्णोः चक्रं सदाऽहं शरणं प्रपद्ये ॥१॥

विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानव दर्पहन्ता ।
तं पाञ्चजन्यं शशिकोटिशुभ्रं शङ्खं सदाऽहं शरणं प्रपद्ये ॥२॥

हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलैकहन्त्रीम् ।
वैकुण्ठवामाग्रकराभिमृष्टां गदां सदाऽहं शरणं प्रपद्ये ॥३॥

रक्षोऽसुराणां कठिनोग्रकण्ठच्छेदक्षरच्छो णितदिग्धधारम् ।
तं नन्दकं नाम हरेः प्रदीप्तं खड्गं सदाऽहं शरणं प्रपद्ये ॥४॥

यज्ज्यानिनादश्रवणात् सुराणां चेतांसि निर्मुक्तभयानि सद्यः ।
भवन्ति दैत्याशनिबाणवर्षी शार्ङ्गं सदाऽहं शरणं प्रपद्ये ॥५॥

इमं हरेः पञ्चमहायुधानां स्तवं पठेद्योऽनुदिनं प्रभाते ।
समस्तदुःखानि भयानि सद्यः पापानि नश्यन्ति सुखानि सन्ति ॥

वने रणे शत्रुजलाग्निमध्ये यदृच्छयापत्सु महाभयेषु ।
इदं पठन् स्तोत्रमनाकुलात्मा सुखी भवेत् तत्कृतसर्वरक्षः ॥७॥

## ॥ श्रीद्वादशनामपञ्जरस्तोत्रम् ॥

पुरस्तात् केशवः पातु चक्री जाम्बूनदप्रभः ।
पश्चान्नारायणः शङ्खी नीलजीमूतसन्निभः ॥१॥

इन्दीवरदळश्यामो माधवोर्ध्वं गदाधरः ।
गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ॥२॥

उत्तरे हलभृद्विष्णुः पद्मकिञ्जल्क सन्निभः
आग्नेय्यामरविन्दाभो मुसली मधुसूदनः ॥३॥

त्रिविक्रमः खड्गपाणिर्निर्ऋत्यां ज्वलनप्रभः ।
वायव्यां वामनो वज्री तरुणादित्यदीप्तिमान् ॥४॥

ऐशान्यां पुण्डरीकाक्षः श्रीधरः पट्टसायुधः ।
विद्युत्प्रभो हृषीकेशो ह्यवाच्यां दिशि मुद्गरी ॥५॥

हृत्पद्मे पद्मनाभो मे सहस्रार्कसमप्रभः ।
सर्वायुधः सर्वशक्तिः सर्वज्ञः सर्वतोमुखः ॥६॥

इन्द्रकोपकसङ्काशः पाशहस्तोऽपराजितः ।
स बाह्याभ्यन्तरं देहं व्याप्य दामोदरः स्थितः ॥७॥

एवं सर्वत्रमच्छिद्रं नामद्वादशपञ्जरम् ।
प्रविष्टोऽहं न मे किञ्चिद्भयमस्ति कदाचन ॥८॥

**भयं नास्ति कदाचन ओं नम इति ॥**

ॐ आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥१॥

आर्तानामार्तिहन्तारं भीतानां भीतिनाशनम् ।
द्विषतां कालदण्डं तं रामचन्द्रं नमाम्यहम् ॥२॥

नमः कोदण्डहस्ताय सन्धीकृतशराय च ।
खण्डिताखिलदैत्याय रामायाऽऽपन्निवारिणे ॥३॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥४॥

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ ।
आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ ॥५॥

सन्नद्धः कवची खड्गी चापबाणधरो युवा ।
गच्छन् ममाग्रतो नित्यं रामः पातु सलक्ष्मणः ॥६॥

अच्युतानन्तगोविन्द नामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगास्सत्यं सत्यं वदाम्यहम् ॥७॥

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम् ॥८॥

शरीरे जर्झरीभूते व्याधिग्रस्ते कळेबरे ।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥९॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणो हरिः॥१०॥

यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तु ते॥

विसर्गबिन्दुमात्राणि पदपादाक्षराणि च ।
न्यूनानि चातिरिक्तानि क्षमस्व पुरुषोत्तम ॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ॥११॥

॥ सर्वं श्रीकृष्णार्पणमस्तु ॥

ॐ विश्वाय नमः

ॐ विष्णवे नमः

ॐ वषट्काराय नमः

ॐ भूतभव्यभवत्प्रभवे नमः

ॐ भूतकृते नमः

ॐ भूतभृते नमः

ॐ भावाय नमः

ॐ भूतात्मने नमः

ॐ भूतभावनाय नमः

ॐ पूतात्मने नमः

ॐ परमात्मने नमः

ॐ मुक्तानां परमागतये नमः

ॐ अव्ययाय नमः

ॐ पुरुषाय नमः

ॐ साक्षिणे नमः

ॐ क्षेत्रज्ञाय नमः

ॐ अक्षराय नमः

ॐ योगाय नमः

ॐ योगविदां नेत्रे नमः

ॐ प्रध[illegible]नपु[illegible]ेश्वराय नमः

ॐ नारसिंहवपुषे नमः

ॐ श्रीमते नमः

ॐ केशवाय नमः

ॐ पुरुषोत्तमाय नमः

ॐ सर्वाय नमः

ॐ शर्वाय नमः

ॐ शिवाय नमः

ॐ स्थाणवे नमः

ॐ भूतादये नमः

ॐ अव्ययाय निधये नमः

ॐ सम्भवाय नमः

ॐ भावनाय नमः

ॐ भर्त्रे नमः

ॐ प्रभवाय नमः

ॐ प्रभवे नमः

ॐ ईश्वराय नमः

ॐ स्वयम्भुवे नमः

ॐ शम्भवे नमः

ॐ आदित्याय नमः

ॐ पुष्कराक्षाय नमः

ॐ महास्वनाय नमः

ॐ अनादिनिधनाय नमः

ॐ धात्रे नमः

ॐ विधात्रे नमः

ॐ धातुरुत्तमाय नमः

ॐ अप्रमेयाय नमः

ॐ हृषीकेशाय नमः

ॐ पद्मनाभाय नमः

ॐ अमरप्रभवे नमः

ॐ विश्वकर्मणे नमः

ॐ मनवे नमः
ॐ त्वष्ट्रे नमः
ॐ स्थविष्ठाय नमः
ॐ स्थविराय नमः
ॐ ध्रुवाय नमः
ॐ अग्राह्याय नमः
ॐ शाश्वताय नमः
ॐ कृष्णाय नमः
ॐ लोहिताक्षाय नमः
ॐ प्रतर्दनाय नमः
ॐ प्रभूताय नमः
ॐ त्रिककुद्धाम्ने नमः
ॐ पवित्राय नमः
ॐ परस्मै मङ्गळाय नमः
ॐ ईशानाय नमः
ॐ प्राणदाय नमः
ॐ प्राणाय नमः
ॐ ज्येष्ठाय नमः
ॐ श्रेष्ठाय नमः
ॐ प्रजापतये नमः
ॐ हिरण्यगर्भाय नमः
ॐ भूगर्भाय नमः
ॐ माधवाय नमः
ॐ मधुसूदनाय नमः
ॐ ईश्वराय नमः

ॐ विक्रमिणे नमः
ॐ धन्विने नमः
ॐ मेधाविने नमः
ॐ विक्रमाय नमः
ॐ क्रमाय नमः
ॐ अनुत्तमाय नमः
ॐ दुराधर्षाय नमः
ॐ कृतज्ञाय नमः
ॐ कृतये नमः
ॐ आत्मवते नमः
ॐ सुरेशाय नमः
ॐ शरणाय नमः
ॐ शर्मणे नमः
ॐ विश्वरेतसे नमः
ॐ प्रजाभवाय नमः
ॐ अह्ने नमः
ॐ संवत्सराय नमः
ॐ व्याळाय नमः
ॐ प्रत्ययाय नमः
ॐ सर्वदर्शनाय नमः
ॐ अजाय नमः
ॐ सर्वेश्वराय नमः
ॐ सिद्धाय नमः
ॐ सिद्धये नमः
ॐ सर्वादये नमः (१००)

ॐ अच्युताय नमः
ॐ वृषाकपये नमः
ॐ अमेयात्मने नमः
ॐ सर्वयोगविनिस्सृताय नमः
ॐ वसवे नमः
ॐ वसुमनसे नमः
ॐ सत्याय नमः
ॐ समात्मने नमः
ॐ सम्मिताय नमः
ॐ समाय नमः
ॐ अमोघाय नमः
ॐ पुण्डरीकाक्षाय नमः
ॐ वृषकर्मणे नमः
ॐ वृषाकृतये नमः
ॐ रुद्राय नमः
ॐ बहुशिरसे नमः
ॐ बभ्रवे नमः
ॐ विश्वयोनये नमः
ॐ शुचिश्रवसे नमः
ॐ अ[illegible] नमः
ॐ शाश्वताय नमः
ॐ स्थाणवे नमः
ॐ वरारोहाय नमः
ॐ महातपसे नमः
ॐ सर्वगाय नमः
ॐ सर्वविदे नमः
ॐ भानवे नमः
ॐ विष्वक्सेनाय नमः
ॐ जनार्दनाय नमः
ॐ वेदाय नमः
ॐ वेदविदे नमः
ॐ अव्यङ्गाय नमः
ॐ वेदाङ्गाय नमः
ॐ वेदविदे नमः
ॐ कवये नमः
ॐ लोकाध्यक्षाय नमः
ॐ सुराध्यक्षाय नमः
ॐ धर्माध्यक्षाय नमः
ॐ कृताकृताय नमः
ॐ चतुरात्मने नमः
ॐ चतुर्व्यूहाय नमः
ॐ चतुर्दंष्ट्राय नमः
ॐ चतुर्भुजाय नमः
ॐ भ्राजिष्णवे नमः
ॐ भोजनाय नमः
ॐ भोक्त्रे नमः
ॐ सहिष्णवे नमः
ॐ जगदादिजाय नमः
ॐ अनघाय नमः
ॐ विजयाय नमः

ॐ जेत्रे नमः
ॐ विश्वयोनये नमः
ॐ पुनर्वसवे नमः
ॐ उपेन्द्राय नमः
ॐ वामनाय नमः
ॐ प्रांशवे नमः
ॐ अमोघाय नमः
ॐ शुचये नमः
ॐ ऊर्जिताय नमः
ॐ अतीन्द्राय नमः
ॐ सङ्ग्रहाय नमः
ॐ सर्गाय नमः
ॐ धृतात्मने नमः
ॐ नियमाय नमः
ॐ यमाय नमः
ॐ वेद्याय नमः
ॐ वैद्याय नमः
ॐ सदायोगिने नमः
ॐ वीरघ्ने नमः
ॐ माधवाय नमः
ॐ मधवे नमः
ॐ अतीन्दियाय नमः
ॐ महामायाय नमः
ॐ महोत्साहाय नमः
ॐ महाबलाय नमः

ॐ महाबुद्धये नमः
ॐ महावीर्याय नमः
ॐ महाशक्तये नमः
ॐ महाद्युतये नमः
ॐ अनिर्देश्यवपुषे नमः
ॐ श्रीमते नमः
ॐ अमेयात्मने नमः
ॐ महाद्रिधृते नमः
ॐ महेष्वासाय नमः
ॐ महीभर्त्रे नमः
ॐ श्रीनिवासाय नमः
ॐ सतां गतये नमः
ॐ अनिरुद्धाय नमः
ॐ सुरानन्दाय नमः
ॐ गोविन्दाय नमः
ॐ गोविदां पतये नमः
ॐ मरीचये नमः
ॐ दमनाय नमः
ॐ हंसाय नमः
ॐ सुपर्णाय नमः
ॐ भुजगोत्तमाय नमः
ॐ हिरण्यनाभाय नमः
ॐ सुतपसे नमः
ॐ पद्मनाभाय नमः
ॐ प्रजापतये नमः

ॐ अमृत्यवे नमः (२००)
ॐ सर्वदृशे नमः
ॐ सिंहाय नमः
ॐ सन्धात्रे नमः
ॐ सन्धिमते नमः
ॐ स्थिराय नमः
ॐ अजाय नमः
ॐ दुर्मर्षणाय नमः
ॐ शास्त्रे नमः
ॐ विश्रुतात्मने नमः
ॐ सुरारिघ्ने नमः
ॐ गुरुतमाय गुरवे नमः
ॐ धाम्ने नमः
ॐ सत्याय नमः
ॐ सत्यपराक्रमाय नमः
ॐ निमिषाय नमः
ॐ अनिमिषाय नमः
ॐ स्रग्विणे नमः
ॐ वाचस्पतये नमः
ॐ उदारधिये नमः
ॐ अग्रण्ये नमः
ॐ ग्रामण्ये नमः
ॐ श्रीमते नमः
ॐ न्यायाय नमः
ॐ नेत्रे नमः

ॐ समीरणाय नमः
ॐ सहस्रमूर्ध्ने नमः
ॐ विश्वात्मने नमः
ॐ सहस्राक्षाय नमः
ॐ सहस्रपदे नमः
ॐ आवर्तनाय नमः
ॐ निवृत्तात्मने नमः
ॐ संवृताय नमः
ॐ संप्रमर्दनाय नमः
ॐ अह्ने नमः
ॐ संवर्तकाय नमः
ॐ वह्नये नमः
ॐ अनिलाय नमः
ॐ धरणीधराय नमः
ॐ सुप्रसादाय नमः
ॐ प्रसन्नात्मने नमः
ॐ विश्वसृजे नमः
ॐ विश्वभुग्विभवे नमः
ॐ सत्कर्त्रे नमः
ॐ सत्कृताय नमः
ॐ साधवे नमः
ॐ जह्नवे नमः
ॐ नारायणाय नमः
ॐ नराय नमः
ॐ असङ्ख्येयाय नमः

ॐ अप्रमेयात्मने नमः
ॐ विशिष्टाय नमः
ॐ शिष्टकृते नमः
ॐ शुचये नमः
ॐ सिद्धार्थाय नमः
ॐ सिद्धसंकल्पाय नमः
ॐ सिद्धिदाय नमः
ॐ सिद्धिसाधनाय नमः
ॐ वृषाहिणे नमः
ॐ वृषभाय नमः
ॐ विष्णवे नमः
ॐ वृषपर्वणे नमः
ॐ वृषोदराय नमः
ॐ वर्धनाय नमः
ॐ वर्धमानाय नमः
ॐ विविक्ताय नमः
ॐ श्रुतिसागराय नमः
ॐ सुभुजाय नमः
ॐ दुर्धराय नमः
ॐ वाग्मिने नमः
ॐ महेन्द्राय नमः
ॐ वसुदाय नमः
ॐ वसवे नमः
ॐ नैकरूपाय नमः
ॐ बृहद्रूपाय नमः
ॐ शिपिविष्टाय नमः
ॐ प्रकाशनाय नमः
ॐ ओजस्तेजोद्युतिधराय नमः
ॐ प्रकाशात्मने नमः
ॐ प्रतापनाय नमः
ॐ ऋद्धाय नमः
ॐ स्पष्टाक्षराय नमः
ॐ मन्त्राय नमः
ॐ चन्द्रांशवे नमः
ॐ भास्करद्युतये नमः
ॐ अमृतांशूद्भवाय नमः
ॐ भानवे नमः
ॐ शशबिन्दवे नमः
ॐ सुरेश्वराय नमः
ॐ औषधाय नमः
ॐ जगतस्सेतवे नमः
ॐ सत्यधर्मपराक्रमाय नमः
ॐ भूतभव्यभवन्नाथाय नमः
ॐ पवनाय नमः
ॐ पावनाय नमः
ॐ अनलाय नमः
ॐ कामघ्ने नमः
ॐ कामकृते नमः
ॐ कान्ताय नमः
ॐ कामाय नमः.

ॐ कामप्रदाय नमः
ॐ प्रभवे नमः (२००)
ॐ युगादिकृते नमः
ॐ युगावर्ताय नमः
ॐ नैकमायाय नमः
ॐ महाशनाय नमः
ॐ अदृश्याय नमः
ॐ व्यक्तरूपाय नमः
ॐ सहस्रजिते नमः
ॐ अनन्तजिते नमः
ॐ इष्टाय अविशिष्टाय नमः
ॐ शिष्टेष्टाय नमः
ॐ शिखण्डिने नमः
ॐ नहुषाय नमः
ॐ वृषाय नमः
ॐ क्रोधघ्ने नमः
ॐ क्रोधकृते नमः
ॐ कर्त्रे नमः
ॐ विश्वबाहवे नमः
ॐ महीधराय नमः
ॐ अच्युताय नमः
ॐ प्रथिताय नमः
ॐ प्राणाय नमः
ॐ प्राणदाय नमः
ॐ वासवानुजाय नमः
ॐ अपान्निधये नमः
ॐ अधिष्ठानाय नमः
ॐ अप्रमत्ताय नमः
ॐ प्रतिष्ठिताय नमः
ॐ स्कन्दाय नमः
ॐ स्कन्दधराय नमः
ॐ धुर्याय नमः
ॐ वरदाय नमः
ॐ वायुवाहनाय नमः
ॐ वासुदेवाय नमः
ॐ बृहद्भानवे नमः
ॐ आदिदेवाय नमः
ॐ पुरन्दराय नमः
ॐ अशोकाय नमः
ॐ तारणाय नमः
ॐ ताराय नमः
ॐ शूराय नमः
ॐ शौरये नमः
ॐ जनेश्वराय नमः
ॐ अनुकूलाय नमः
ॐ शतावर्ताय नमः
ॐ पद्मिने नमः
ॐ पद्मनिभेक्षणाय नमः
ॐ पद्मनाभाय नमः
ॐ अरविन्दाक्षाय नमः

ॐ पद्मगर्भाय नमः
ॐ शरीरभृते नमः
ॐ महर्द्धये नमः
ॐ ऋद्धाय नमः
ॐ वृद्धात्मने नमः
ॐ महाक्षाय नमः
ॐ गरुडध्वजाय नमः
ॐ अतुलाय नमः
ॐ शरभाय नमः
ॐ भीमाय नमः
ॐ समयज्ञाय नमः
ॐ हविषे नमः
ॐ हरये नमः
ॐ सर्वलक्षणलक्षण्याय नमः
ॐ लक्ष्मीवते नमः
ॐ समितिञ्जयाय नमः
ॐ विक्षराय नमः
ॐ रोहिताय नमः
ॐ मार्गाय नमः
ॐ हेतवे नमः
ॐ दामोदराय नमः
ॐ सहाय नमः
ॐ महीधराय नमः
ॐ महाभागाय नमः
ॐ वेगवते नमः

ॐ अमिताशनाय नम
ॐ उद्भवाय नमः
ॐ क्षोभणाय नमः
ॐ देवाय नमः
ॐ श्रीगर्भाय नमः
ॐ परमेश्वराय नमः
ॐ करणाय नमः
ॐ कारणाय नमः
ॐ कर्त्रे नमः
ॐ विकर्त्रे नमः
ॐ गहनाय नमः
ॐ गुहाय नमः
ॐ व्यवसायाय नमः
ॐ व्यवस्थानाय नमः
ॐ संस्थानाय नमः
ॐ स्थानदाय नमः
ॐ ध्रुवाय नमः
ॐ परर्द्धये नमः
ॐ परमस्पष्टाय नमः
ॐ तुष्टाय नमः
ॐ पुष्टाय नमः
ॐ शुभेक्षणाय नमः
ॐ रामाय नमः
ॐ विरामाय नमः
ॐ विरताय नमः

ॐ मार्गाय नमः

ॐ नेयाय नमः

ॐ नयाय नमः (४००)

ॐ अनयाय नमः

ॐ वीराय नमः

ॐ शक्तिमतां श्रेष्ठाय नमः

ॐ धर्माय नमः

ॐ धर्मविदुत्तमाय नमः

ॐ वैकुण्ठाय नमः

ॐ पुरुषाय नमः

ॐ प्राणाय नमः

ॐ प्राणदाय नमः

ॐ प्रणमाय नमः

ॐ पृथवे नमः

ॐ हिरण्यगर्भाय नमः

ॐ शत्रुघ्नाय नमः

ॐ व्याप्ताय नमः

ॐ वायवे नमः

ॐ अधोक्षजाय नमः

ॐ ऋतवे नमः

ॐ सुदर्शनाय नमः

ॐ कालाय नमः

ॐ परमेष्ठिने नमः

ॐ परिग्रहाय नमः

ॐ उग्राय नमः

ॐ संवत्सराय नमः

ॐ दक्षाय नमः

ॐ विश्रामाय नमः

ॐ विश्वदक्षिणाय नमः

ॐ विस्ताराय नमः

ॐ स्थावरस्थाणवे नमः

ॐ प्रमाणाय नमः

ॐ बीजायाव्ययाय नमः

ॐ अर्थाय नमः

ॐ अनर्थाय नमः

ॐ महाकोशाय नमः

ॐ महाभोगाय नमः

ॐ महाधनाय नमः

ॐ अनिर्विण्णाय नमः

ॐ स्थविष्ठाय नमः

ॐ भुवे नमः

ॐ धर्मयूपाय नमः

ॐ महामखाय नमः

ॐ नक्षत्रनेमये नमः

ॐ नक्षत्रिणे नमः

ॐ क्षमाय नमः

ॐ क्षामाय नमः

ॐ समीहनाय नमः

ॐ यज्ञाय नमः

ॐ इज्याय नमः

ॐ महेज्याय नमः

ॐ क्रतवे नमः

ॐ सत्राय नमः

ॐ सताङ्गतये नमः

ॐ सर्वदर्शिने नमः

ॐ निवृत्तात्मने नमः

ॐ सर्वज्ञाय नमः

ॐ ज्ञानाय उत्तमाय नमः

ॐ सुव्रताय नमः

ॐ सुमुखाय नमः

ॐ सूक्ष्माय नमः

ॐ सुघोषाय नमः

ॐ सुखदाय नमः

ॐ सुहृदे नमः

ॐ मनोहराय नमः

ॐ जितक्रोधाय नमः

ॐ वीरबाहवे नमः

ॐ विदारणाय नमः

ॐ स्वापनाय नमः

ॐ स्ववशाय नमः

ॐ व्यापिने नमः

ॐ नैकात्मने नमः

ॐ नैककर्मकृते नमः

ॐ वत्सराय नमः

ॐ वत्सलाय नमः

ॐ वत्सिने नमः

ॐ रत्नगर्भाय नमः

ॐ धनेश्वराय नमः

ॐ धर्मगुपे नमः

ॐ धर्मकृते नमः

ॐ धर्मिणे नमः

ॐ सते नमः

ॐ अक्षरसते नमः

ॐ असते नमः

ॐ असत्क्षराय नमः

ॐ अविज्ञात्रे नमः

ॐ सहस्रांशवे नमः

ॐ विधात्रे नमः

ॐ कृतलक्षणाय नमः

ॐ गभस्तिनेमये नमः

ॐ सत्त्वस्थाय नमः

ॐ सिंहाय नमः

ॐ भूतमहेश्वराय नमः

ॐ आदिदेवाय नमः

ॐ महादेवाय नमः

ॐ देवेशाय नमः

ॐ देवभृते नमः

ॐ गुरवे नमः

ॐ उत्तराय नमः

ॐ गोपतये नमः

ॐ गोप्त्रे नमः

ॐ ज्ञानगम्याय नमः

ॐ पुरातनाय नमः (५००)

ॐ शरीरभूतभृते नमः

ॐ भोक्त्रे नमः

ॐ कपीन्द्राय नमः

ॐ भूरिदक्षिणाय नमः

ॐ सोमपाय नमः

ॐ अमृतपाय नमः

ॐ सोमाय नमः

ॐ पुरुजिते नमः

ॐ पुरुसत्तमाय नमः

ॐ विनयाय नमः

ॐ जयाय नमः

ॐ सत्यसन्धाय नमः

ॐ दाशार्हाय नमः

ॐ सात्त्वताम्पतये नमः

ॐ जीवाय नमः

ॐ विनयित्रे नमः

ॐ साक्षिणे नमः

ॐ मुकुन्दाय नमः

ॐ अमितविक्रमाय नमः

ॐ अम्भोनिधये नमः

ॐ अनन्तात्मने नमः

ॐ महोदधिशयाय नमः

ॐ अन्तकाय नमः

ॐ महर्हाय नमः

ॐ स्वाभाव्याय नमः

ॐ जितामित्राय नमः

ॐ प्रमोदनाय नमः

ॐ आनन्दाय नमः

ॐ नन्दनाय नमः

ॐ नन्दाय नमः

ॐ सत्यधर्मणे नमः

ॐ त्रिविक्रमाय नमः

ॐ महर्षये नमः

ॐ कपिलाचार्याय नमः

ॐ कृतज्ञाय नमः

ॐ मेदिनीपतये नमः

ॐ त्रिपदाय नमः

ॐ त्रिदशाध्यक्षाय नमः

ॐ महाशृङ्गाय नमः

ॐ कृतान्तकृते नमः

ॐ महावराहाय नमः

ॐ गोविन्दाय नमः

ॐ सुषेणाय नमः

ॐ कनकाङ्गदिने नमः

ॐ गुह्याय नमः

ॐ गभीराय नमः

ॐ गहनाय नमः

ॐ गुप्ताय नमः

ॐ चक्रगदाधराय नमः

ॐ वेधसे नमः

ॐ स्वाङ्गाय नमः

ॐ अजिताय नमः

ॐ कृष्णाय नमः

ॐ दृढाय नमः

ॐ सङ्कर्षणाय नमः

ॐ अच्युताय नमः

ॐ वरुणाय नमः

ॐ वारुणाय नमः

ॐ वृक्षाय नमः

ॐ पुष्कराक्षाय नमः

ॐ महामनसे नमः

ॐ भगवते नमः

ॐ भगघ्ने नमः

ॐ नन्दिने नमः

ॐ वनमालिने नमः

ॐ हलायुधाय नमः

ॐ आदित्याय नमः

ॐ ज्योतिरादित्याय नमः

ॐ सहिष्णवे नमः

ॐ गतिसत्तमाय नमः

ॐ सुधन्वने नमः

ॐ खण्डपरशवे नमः

ॐ दारुणाय नमः

ॐ द्रविणप्रदाय नमः

ॐ दिविस्पृशे नमः

ॐ सर्वदृशे नमः

ॐ व्यासाय नमः

ॐ वाचस्पतये नमः

ॐ अयोनिजाय नमः

ॐ त्रिसाम्ने नमः

ॐ सामगाय नमः

ॐ साम्ने नमः

ॐ निर्वाणाय नमः

ॐ भेषजाय नमः

ॐ भिषजे नमः

ॐ सन्न्यासकृते नमः

ॐ शमाय नमः

ॐ शान्ताय नमः

ॐ निष्ठायै नमः

ॐ शान्तये नमः

ॐ परायणाय नमः

ॐ शुभाङ्गाय नमः

ॐ शान्तिदाय नमः

ॐ स्रष्ट्रे नमः

ॐ कुमुदाय नमः

ॐ कुवलेशयाय नमः

ॐ गोहिताय नमः

ॐ गोपतये नमः
ॐ गोप्त्रे नमः (६००)
ॐ वृषभाक्षाय नमः
ॐ वृषप्रियाय नमः
ॐ अनिवर्तिने नमः
ॐ निवृत्तात्मने नमः
ॐ संक्षेप्त्रे नमः
ॐ क्षेमकृते नमः
ॐ शिवाय नमः
ॐ श्रीवत्सवक्षसे नमः
ॐ श्रीवासाय नमः
ॐ श्रीपतये नमः
ॐ श्रीमतां वराय नमः
ॐ श्रीदाय नमः
ॐ श्रीशाय नमः
ॐ श्रीनिवासाय नमः
ॐ श्रीनिधये नमः
ॐ श्रीविभावानाय नमः
ॐ श्रीधराय नमः
ॐ श्रीकारय नमः
ॐ श्रेयः श्रीमते नमः
ॐ लोकत्रयाश्रायाय नमः
ॐ स्वक्षाय नमः
ॐ स्वङ्गाय नमः
ॐ शतानन्दाय नमः

ॐ नन्दये नमः
ॐ ज्योतिर्गणेश्वराय नमः
ॐ विजितात्मने नमः
ॐ विधेयात्मने नमः
ॐ सत्कीर्तये नमः
ॐ छिन्नसंशयाय नमः
ॐ उदीर्णाय नमः
ॐ सर्वतश्चक्षुषे नमः
ॐ अनीशाय नमः
ॐ शाश्वतस्स्थिराय नमः
ॐ भूशयाय नमः
ॐ भूषणाय नमः
ॐ भूतये नमः
ॐ अशोकाय नमः
ॐ शोकनाशनाय नमः
ॐ अर्चिष्मते नमः
ॐ अर्चिताय नमः
ॐ कुम्भाय नमः
ॐ विशुद्धात्मने नमः
ॐ विशोधनाय नमः
ॐ अनिरुद्धाय नमः
ॐ अप्रतिरथाय नमः
ॐ प्रद्युम्नाय नमः
ॐ अमितविक्रमाय नमः
ॐ कालनेमिनिघ्ने नमः

ॐ शौरये नमः
ॐ शूराय नमः
ॐ शूरजनेश्वराय नमः
ॐ त्रिलोकात्मने नमः
ॐ त्रिलोकेशाय नमः
ॐ केशवाय नमः
ॐ केशिघ्ने नमः
ॐ हरये नमः
ॐ कामदेवाय नमः
ॐ कामपालाय नमः
ॐ कामिने नमः
ॐ कान्ताय नमः
ॐ कृतागमाय नमः
ॐ अनिर्देश्यवपुषे नमः
ॐ विष्णवे नमः
ॐ वीराय नमः
ॐ अनन्ताय नमः
ॐ धनञ्जयाय नमः
ॐ ब्रह्मण्याय नमः
ॐ ब्रह्मकृद्ब्रह्मणे नमः
ॐ ब्रह्मणे नमः
ॐ ब्रह्म विवर्धनाय नमः
ॐ ब्रह्मविदे नमः
ॐ ब्राह्मणाय नमः
ॐ ब्रह्मिणे नमः

ॐ ब्रह्मज्ञाय नमः
ॐ ब्राह्मणप्रियाय नमः
ॐ महाक्रमाय नमः
ॐ महाकर्मणे नमः
ॐ महातेजसे नमः
ॐ महोरगाय नमः
ॐ महाक्रतवे नमः
ॐ महायज्वने नमः
ॐ महायज्ञाय नमः
ॐ महाहविषे नमः
ॐ स्तव्याय नमः
ॐ स्तवप्रियाय नमः
ॐ स्तोत्राय नमः
ॐ स्तुताय नमः
ॐ स्तोत्रे नमः
ॐ रणप्रियाय नमः
ॐ पूर्णाय नमः
ॐ पूरयित्रे नमः
ॐ पुण्याय नमः
ॐ पुण्यकीर्तये नमः
ॐ अनामयाय नमः
ॐ मनोजवाय नमः
ॐ तीर्थकराय नमः
ॐ वसुरेतसे नमः
ॐ वसुप्रदाय नमः

ॐ वसुप्रदाय नमः
ॐ वासुदेवाय नमः (७००)
ॐ वसवे नमः
ॐ वसुमनसे नमः
ॐ हविषे नमः
ॐ सद्गतये नमः
ॐ सत्कृतये नमः
ॐ सत्तायै नमः
ॐ सद्भूतये नमः
ॐ सत्परायणाय नमः
ॐ शूरसेनाय नमः
ॐ यदुश्रेष्ठाय नमः
ॐ सन्निवासाय नमः
ॐ सुयामुनाय नमः
ॐ भूतावासाय नमः
ॐ वासुदेवाय नमः
ॐ सर्वासुनिलयाय नमः
ॐ अनलाय नमः
ॐ दर्पघ्ने नमः
ॐ दर्पदाय नमः
ॐ अदृप्ताय नमः
ॐ दुर्धराय नमः
ॐ अपराजिताय नमः
ॐ विश्वमूर्तये नमः
ॐ महामूर्तये नमः

ॐ दीप्तमूर्तये नमः
ॐ अमूर्तिमते नमः
ॐ अनेकमूर्तये नमः
ॐ अव्यक्ताय नमः
ॐ शतमूर्तये नमः
ॐ शताननाय नमः
ॐ एकाय नमः
ॐ नैकाय नमः
ॐ साय नमः
ॐ वाय नमः
ॐ काय नमः
ॐ किमे नमः
ॐ यते नमः
ॐ तते नमः
ॐ पदायाऽनुत्तमाय नमः
ॐ लोकबन्धवे नमः
ॐ लोकनाथाय नमः
ॐ माधवाय नमः
ॐ भक्तवत्सलाय नमः
ॐ सुवर्णवर्णाय नमः
ॐ हेमाङ्गाय नमः
ॐ वराङ्गाय नमः
ॐ चन्दनांगदिने नमः
ॐ वीरघ्ने नमः
ॐ विषमाय नमः

ॐ शून्याय नमः
ॐ घृताशिषे नमः
ॐ अचलाय नमः
ॐ चलाय नमः
ॐ अमानिने नमः
ॐ मानदाय नमः
ॐ मान्याय नमः
ॐ लोकस्वामिने नमः
ॐ त्रिलोकधृते नमः
ॐ सुमेधसे नमः
ॐ मेधजाय नमः
ॐ धन्याय नमः
ॐ सत्यमेधसे नमः
ॐ धराधराय नमः
ॐ तेजोवृषाय नमः
ॐ द्युतिधराय नमः
ॐ सर्वशस्त्रभृतां वराय नमः
ॐ प्रग्रहाय नमः
ॐ विग्रहाय नमः
ॐ व्यग्राय नमः
ॐ नैकश्रृङ्गाय नमः
ॐ गदाग्रजाय नमः
ॐ चतुर्मूर्तये नमः
ॐ चतुर्बाहवे नमः
ॐ चतुर्व्यूहाय नमः

ॐ चतुर्गतये नमः
ॐ चतुरात्मने नमः
ॐ चतुर्भावाय नमः
ॐ चतुर्वेदविदे नमः
ॐ एकपदे नमः
ॐ समावर्ताय नमः
ॐ निवृत्तात्मने नमः
ॐ दुर्जयाय नमः
ॐ दुरतिक्रमाय नमः
ॐ दुर्लभाय नमः
ॐ दुर्गमाय नमः
ॐ दुर्गाय नमः
ॐ दुरावासाय नमः
ॐ दुरारिघ्ने नमः
ॐ शुभाङ्गाय नमः
ॐ लोकसारङ्गाय नमः
ॐ सुतन्तवे नमः
ॐ तन्तुवर्धनाय नमः
ॐ इन्द्रकर्मणे नमः
ॐ महाकर्मणे नमः
ॐ कृतकर्मणे नमः
ॐ कृतागमाय नमः
ॐ उद्भवाय नमः
ॐ सुन्दराय नमः
ॐ सुन्दाय नमः

ॐ रत्ननाभाय नमः

ॐ सुलोचनाय नमः (८००)

ॐ अर्काय नमः

ॐ वाजसनये नमः

ॐ श्रृङ्गिणे नमः

ॐ जयन्ताय नमः

ॐ सर्वविज्जयिने नमः

ॐ सुवर्णबिन्दवे नमः

ॐ अक्षोभ्याय नमः

ॐ सर्ववागीश्वरेश्वराय नमः

ॐ महाह्रदाय नमः

ॐ महागर्ताय नमः

ॐ महाभूताय नमः

ॐ महानिधये नमः

ॐ कुमुदाय नमः

ॐ कुन्दराय नमः

ॐ कुन्दाय नमः

ॐ पर्जन्याय नमः

ॐ पवनाय नमः

ॐ अनिलाय नमः

ॐ अमृताशाय नमः

ॐ अमृतवपुषे नमः

ॐ सर्वज्ञाय नमः

ॐ सर्वतोमुखाय नमः

ॐ सुलभाय नमः

ॐ सुव्रताय नमः

ॐ सिद्धाय नमः

ॐ शत्रुजिच्छत्रुतापनाय नमः

ॐ न्यग्रोधोदुम्बराय नमः

ॐ अश्वत्थाय नमः

ॐ चाणूरान्ध्रनिषूदनाय नमः

ॐ सहस्रार्चिषे नमः

ॐ सप्तजिह्वाय नमः

ॐ सप्तैधसे नमः

ॐ सप्तवाहनाय नमः

ॐ अमूर्तये नमः

ॐ अनघाय नमः

ॐ अचिन्त्याय नमः

ॐ भयकृते नमः

ॐ भयनाशनाय नमः

ॐ अणवे नमः

ॐ बृहते नमः

ॐ कृशाय नमः

ॐ स्थूलाय नमः

ॐ गुणभृते नमः

ॐ निर्गुणाय नमः

ॐ महते नमः

ॐ अधृताय नमः

ॐ स्वधृताय नमः

ॐ स्वास्याय नमः
ॐ प्राग्वंशाय नमः
ॐ वंशवर्धनाय नमः
ॐ भारभृते नमः
ॐ कथिताय नमः
ॐ योगिने नमः
ॐ योगीशाय नमः
ॐ सर्वकामदाय नमः
ॐ आश्रमाय नमः
ॐ श्रमणाय नमः
ॐ क्षामाय नमः
ॐ सुपर्णाय नमः
ॐ वायुवाहनाय नमः
ॐ धनुर्धराय नमः
ॐ धनुर्वेदाय नमः
ॐ दण्डाय नमः
ॐ दमयित्रे नमः
ॐ अदमाय नमः
ॐ अपराजिताय नमः
ॐ सर्वसहाय नमः
ॐ नियन्त्रे नमः
ॐ नियमाय नमः
ॐ यमाय नमः
ॐ सत्त्ववते नमः
ॐ सात्त्विकाय नमः
ॐ सत्याय नमः
ॐ सत्यधर्मपरायणाय नमः
ॐ अभिप्रायाय नमः
ॐ प्रियार्हाय नमः
ॐ अर्हाय नमः
ॐ प्रियकृते नमः
ॐ प्रीतिवर्धनाय नमः
ॐ विहायसगतये नमः
ॐ ज्योतिषे नमः
ॐ सुरुचये नमः
ॐ हुतभुग्विभवे नमः
ॐ रवये नमः
ॐ विरोचनाय नमः
ॐ सूर्याय नमः
ॐ रविलोचनाय नमः
ॐ अनन्तहुतभुग्भोक्त्रे नमः
ॐ सुखदाय नमः
ॐ नैकदाय नमः
ॐ अग्रजाय नमः
ॐ अनिर्विण्णाय नमः
ॐ सदामर्षिणे नमः
ॐ लोकाधिष्ठानाय नमः
ॐ अद्भुताय नमः
ॐ सनाते नमः
ॐ सनातनतमाय नमः
ॐ कपिलाय नमः

ॐ कपयेऽव्याय नमः (१००)

ॐ स्वस्तिदाय नमः

ॐ स्वस्तिकृते नमः

ॐ स्वस्तिभुजे नमः

ॐ स्वस्तिदक्षिणाय नमः

ॐ अरौद्राय नमः

ॐ कुण्डलिने नमः

ॐ चक्रिणे नमः

ॐ विक्रमिणे नमः

ॐ ऊर्जितशासनाय नमः

ॐ शब्दातिगाय नमः

ॐ शब्दसहाय नमः

ॐ शिशिराय नमः

ॐ शर्वरीकराय नमः

ॐ अक्रूराय नमः

ॐ पेशलाय नमः

ॐ दक्षाय नमः

ॐ दक्षिणाय नमः

ॐ क्षमिणां वराय नमः

ॐ वि[illegible]ाय नमः

ॐ वीतभयाय नमः

ॐ पुण्यश्रवणकीर्तनाय नमः

ॐ उत्तारणाय नमः

ॐ दुष्कृतिघ्ने नमः

ॐ पुण्याय नमः

ॐ दुस्स्वप्ननाशनाय नमः

ॐ वीरघ्ने नमः

ॐ रक्षणाय नमः

ॐ सन्ताय नमः

ॐ जीवनाय नमः

ॐ पर्यवस्थिताय नमः

ॐ अनन्तरूपाय नमः

ॐ अनन्तश्रिये नमः

ॐ जितमन्यवे नमः

ॐ भयापहाय नमः

ॐ चतुरश्राय नमः

ॐ गभीरात्मने नमः

ॐ विदिशाय नमः

ॐ व्यादिशाय नमः

ॐ दिशाय नमः

ॐ अनादये नमः

ॐ भुवो भुवे नमः

ॐ लक्ष्म्यै नमः

ॐ सुवीराय नमः

ॐ रुचिराङ्गदाय नमः

ॐ जननाय नमः

ॐ जनजन्मादये नमः

ॐ भीमाय नमः

ॐ भीमपराक्रमाय नमः

ॐ आधारनिलया नमः

ॐ धात्रे नमः
ॐ पुष्पहासाय नमः
ॐ प्रजागराय नमः
ॐ ऊर्ध्वगाय नमः
ॐ सत्पथाचाराय नमः
ॐ प्राणदाय नमः
ॐ प्रणवाय नमः
ॐ पणाय नमः
ॐ प्रमाणाय नमः
ॐ प्राणनिलयाय नमः
ॐ प्राणधृते नमः
ॐ प्राणजीवनाय नमः
ॐ तत्त्वाय नमः
ॐ तत्त्वविदे नमः
ॐ एकात्मने नमः
ॐ जन्ममृत्युजरातिगाय नमः
ॐ भूर्भुवस्स्वस्तरवे नमः
ॐ ताराय नमः
ॐ सवित्रे नमः
ॐ प्रपितामहाय नमः
ॐ यज्ञाय नमः
ॐ यज्ञपतये नमः
ॐ यज्वने नमः
ॐ यज्ञाङ्गाय नमः
ॐ यज्ञवाहनाय नमः
ॐ यज्ञभृते नमः
ॐ यज्ञकृते नमः
ॐ यज्ञभुजे नमः
ॐ यज्ञिने नमः
ॐ यज्ञसाधनाय नमः
ॐ यज्ञान्तकृते नमः
ॐ यज्ञगुह्याय नमः
ॐ अन्नाय नमः
ॐ अन्नदाय नमः
ॐ आत्मयोनये नमः
ॐ स्वयजाताय नमः
ॐ वैखानाय नमः
ॐ सामगायनाय नमः
ॐ देवकीनन्दनाय नमः
ॐ स्रष्ट्रे नमः
ॐ क्षितीशाय नमः
ॐ पापनाशानाय नमः
ॐ शङ्खभृते नमः
ॐ नन्दकिने नमः
ॐ चक्रिणे नमः
ॐ शार्ङ्गधन्वने नमः
ॐ गदाधराय नमः
ॐ रथाङ्गपाणये नमः
ॐ अक्षोभ्याय नमः
ॐ सर्वप्रहरणायुधाय नमः

॥ श्रीविष्णुसहस्रनामवलिस्संपूर्णा ॥

॥ शुभमस्तु ॥

## जितन्ते स्तोत्रम्

1. जितन्ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन! ।
नमस्तेऽस्तु हृषीकेश ! महापुरुष! पूर्वज! ॥

2. देवानां दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥

3. एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्षश्चानुमन्ता च गुणमाया समावृतः ॥

4. संसार सागरं घोरमनन्त क्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥

5. न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥

6. नैव किञ्चित्परोक्षन्ते प्रत्यक्षोऽसि न कस्यचित् ।
नैव किञ्चिदसिद्धन्ते न च सिद्धोसि कस्यचित् ॥

7. कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगानां परमां सिद्धिं परमं ते पदं विदुः ॥

8. अहं भीतोऽस्मि देवेश! संसारे ऽस्मिन् भयावहे ।
पाहि मां पुण्डरीकाक्ष! न जाने शरणं परम् ॥

9. कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत! ।
शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥

10. त्वत्पाद कमलादन्यन्न मे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥

11. विज्ञानं यदिदं प्राप्तं यदिदं स्थानमार्जितम् ।
जन्मान्तरेऽपि मे देव! माभूत्तस्य परिक्षयः ॥

12. दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।
यदि नाशं न विन्देत तावताऽस्मि कृती सदा ॥

13. न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥

14. इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।
किङ्करोऽस्मीति चात्मानं देवायैवं निवेदयेत् ॥

15. सोऽहं ते देवदेवेश! नार्चनादौ स्तुतौ न च ।
सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥

16. उपचारापदेशेन कृतानहरहर्मया ।
अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ॥

॥ शुभमस्तु ॥

धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः ।
कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥१॥

नारायणमयं वर्म सन्नह्येद् भय आगते ।
पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥२॥

मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ।
ॐ नमो नारायणयेति विपर्ययमथापि वा ॥३॥

करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ।
प्रणवादियकारान्तमङ्गुल्यङ्गुष्ठपर्वसु ॥४॥

न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि ।
षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥५॥

वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ।
मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद् बुधः ॥६॥

सविसर्गं फडन्तं तत् सर्वदिक्षु विनिर्दिशेत् ।
ॐ विष्णवे नम इति ॥७॥

आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥८॥

ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदे षुचाप पाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥॥

जलेषु मां रक्षतु मत्स्यमूर्ति र्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थलेषु मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥१०॥

दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥११॥

रक्षत्वसौ माध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान् ॥१२॥

मामुग्रधर्मादखिलात् प्रमादा न्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबन्धात् ॥१३॥

सनत्कुमारोऽवतु कामदेवा द्धयशीर्षा मां पथि देवहेलनात् ।
देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात् ॥१४॥

धन्वन्तरिर्भगवान् पात्वपथ्याद् द्वन्द्वाद् भयात्ऋषभो निर्जितात्मा ।
यज्ञश्च लोकादवताज्जनान्ताद् बलो गणात् क्रोधवशादहीन्द्रः ॥१५॥

द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखण्डगणात् प्रमादात् ।
कल्किः कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥१६॥

मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गवमात्तवेणुः ।
नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥१७॥

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥१८॥

श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥१९॥

चक्रं युगान्तानलतिग्मनेमि भ्रमत् समन्ताद् भगवत्प्रयुक्तम् ।
दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥२०॥

गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि ।
कूष्माण्डवैनायकयक्षरक्षो भूतग्रहांश्चूर्णय चूर्णयारीन् ॥२१॥

त्वं यातुधानप्रमथप्रेतमातृ पिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥२२॥

त्वं तिग्मधारासिवरारिसैन्य मीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥२३॥

यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥२४॥

सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु संक्षयं सद्यो ये नः श्रेयः प्रतीपकाः ॥२५ ॥

गरुडो भगवान् स्तोत्रस्तोमश्छन्दोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥२६॥

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धीन्द्रियमनः प्राणान् पान्तु पार्षदभूषणाः ॥२७॥

यथा हि भगवानेव वस्तुतः सदसच्च यत् ।
सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥२८॥

यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ।
भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥२९॥

तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥३०॥

विदिक्षु दिक्षूर्ध्वमधः समन्ता दन्तर्बहिर्भगवान् नारसिंहः ।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥३१॥

मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥३२॥

एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत् सद्यः साध्वसात् स विमुच्यते ॥३३॥

न कुतश्चिद् भयं तस्य विद्यां धारयतो भवेत्।
राजदस्यु ग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥३४॥

इमां विद्यांपुरा कश्चित् कौशिको धारयन् द्विजः ।
योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥३५॥

तस्योपरि विमानेन गन्धर्वपतिरेकदा ।
ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥३६॥

गगनान्न्यपतत् सद्यः सविमानो ह्यवाक्शिराः ।
स वालखिल्यवचनादस्थीन्यादाय विस्मितः
प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥३७॥

य इदं श्रृणुयात् काले यो धारयति चादृतः ।
तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥३८॥

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥३९॥

॥शुभमस्तु॥

## Our Publications in Tamil are :

1. **Azhwarkal Vaibhavam :** Written by Vadivazhagiya Nambidasar 1569 Poems with commentary. 720 Pages, Price Rs. 64/-

2. **Sri Ramanuja Vaibhavam :** Written by Vadivazhagiya Nambidasar 1382 Poems with commentary. 586Page Rs. 54/-

3. **Amalanadipiran :** Written by Thiruppanazhwar with 3 commentaries including Munivahana Bhogam 122 Pages Rs. 10/-

4. **Sri Maha Bhagavatham :** Written by Arulaladasar 9141 Poems. with elaborate preface. synopsis of the story and foot notes. 2,500 Pages. Totally 5 Volumes Price Rs. 250/-

5. **Vidura Neethi & Yaksha Prashnam :** Sanskrit text with an elaborate Tamil commentary. 176 Pages Rs. 20/-

6. **Sriman Narayaneeyam :** 1034 Sanskrit Slokas 1034 Tamil Poems. with an elaborate commentary. 706 Pages Rs. 80/-

7. **Sri Yatiraja Vijayam :** Drama Aligorical 14th Century Sanskrit play written by Sri Vatsya Varadacharya. with Hindi Translation. No. of Pages 226. Price Rs. 35/-

8. **Sri Yatiraja Vijayam :** Sanskrit text, with Tamil Translation. No. of pages 266. Price Rs. 32/-

9. **Sri Yatiraja Vijayam :** Sanskrit text only. No. of Pages 112. Price Rs. 15/-